राष्ट्रियसंस्कृतविश्वविद्यालयग्रन्थमाला-355

ISSN: 2231-0452

# महस्विनी
# MAHASVINĪ

## विद्वन्मण्डलीसमीक्षिता परामृष्टा च शोधपत्रिका
## (Peer-reviewed and Refereed Research Journal)

कुसुमम् : जानुवारी - जुलै २०२३
Vol. January - July 2023

सम्पुटम् : प्रथमम्
Part : First

प्रधानसम्पादकः
आचार्यः जि.एस.आर्.कृष्णमूर्तिः
कुलपतिः

सम्पादकः
आचार्यः शिवरामभट्टः




राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः
(केन्द्रीयविश्वविद्यालयः)

# महस्विनी

(विद्वन्मण्डलीसमीक्षिता परामृष्टा च शोधपत्रिका)

**ISSN : 2231-0452**

कुसुमम्  : जनवरी – जुलै २०२३
सम्पुटम्  : प्रथमम्

प्रकाशनवर्षम् : २०२३
प्रतिकृतयः  : १५०



प्रकाशकः

**कुलसचिवः**
राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः

संयोजकः

**अनुसन्धानप्रकाशनविभागः**
राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः

Prof. G.S.R. KRISHNA MURTY
VICE - CHANCELLOR




NATIONAL SANSKRIT UNIVERSITY
(Central University)
TIRUPATI – 5175107 (A.P.)

# अभिनन्दनचन्दनम्

अखिलाण्डकोटिब्रह्माण्डनायकस्य शेषाचलश्रीनिवासस्य पद्मावतीजानेः श्रीवेङ्कटेशस्य कृपाकटाक्षेण नैरन्तर्येणैधमानस्याविश्वं कीर्तिं लभमानस्य तिरुपतिस्थस्य राष्ट्रियसंस्कृतविश्वविद्यालयस्य शोधप्रकाशनविभागेन प्रकाश्यमानायाः सुप्रथितायाः विद्वन्मण्डलीसीक्षितायाः परामृष्टायाश्चास्या 'महस्विनी' इत्याख्यायाः शोधपत्रिकाया कुसुममिदं प्रकाश्य विद्वत्तल्लजानां करकमलयोः सादरं समर्पयितुं नितान्तं मोमोत्ति मे स्वान्तम्।

तत्र आप्राक्कालान्निरवच्छिन्नं प्रवर्तमाने प्रवर्धमाने च गवेषणाकार्ये नैके विपश्चित्पश्चिमा विविधशास्त्रनदीष्णाः पूर्वतनानां विचारविगर्भितशेवधीन् विमृश्य तैस्तत्रानाविष्कृतान् स्वोपज्ञान् विषयानधिकृत्य ग्रन्थान् प्रणीय शोधप्रबन्धाँश्च विनिर्माय संस्कृतवाङ्मयं संवर्धयन्तोऽ–नुसन्धानक्षेत्रस्य सीमानमपि नित्यं परिवर्धयन्तो दृश्यन्ते बद्धपरिकराः। तामेव परम्परामिदानीमपि अनुसरन्त आधुनिकविद्वांसः, शोधार्थिनो युवगवेषकाश्च स्वस्वविषये क्रियमाणे शोधकर्मणि गुणवत्तामादातुं यतमाना वर्तन्ते। तैः कृतं कार्यं परिशील्य समीक्ष्य च प्रोत्साहयितुं सहायिका भवन्ति एतादृश्यः शोधपत्रिकाः। तदर्थं बहुभिः संस्थाभिः निकायैर्वा विदुषां मार्गदर्शनेन बहुविधशोधपत्रिकाः प्रकाश्यन्ते। एतदुद्दिश्यास्माकं विश्वविद्यालयेनापि तत्र–तत्र कार्यरतेभ्यो विद्वद्भ्यः, प्राध्यापकेभ्यः शोधच्छात्रेभ्यश्च शोधनिबन्धान् शोधलेखान् सङ्कलय्य विद्वन्मण्डलीद्वारा तेषां गुणवत्तां मौलिकतां च परीक्ष्य विद्वत्समीतेः समीक्षायाः संस्तुतेः परं संस्तुतान् लेखान्समादृत्य पत्रिकेयं प्रकाश्यते। अनेनानुसन्धानक्षेत्रे गवेषणारतच्छात्राणां कृते नूतनसिद्धान्तानां काचिदपूर्वा सरणिः समुपलब्धा भवतीति मे द्रढीयान् विश्वासः। महस्विन्याश्चेदं कुसुमं पण्डितानां पाण्डितीप्रपूर्णैः लेखैः सुशोभितशशीव सुशोभतेतरां नितराम्। एवञ्चास्याः पत्रिकाया एतादृशं सुन्दरं कलेवरं

सम्पादयितुं यैर्मनीषिभिरवयवरूपाः स्वीया लेखाः समर्पितास्तेभ्यः समेभ्यः हृदयेन धन्यतावचांसि प्रकटयामि।

एवमेव एतादृशप्रकाशनकार्यस्य साफल्याय निरन्तरं प्रवर्तमानो नः शोधप्रकाशनविभागः तथैवान्तर्बाह्यसदस्यैः समन्विता प्रकाशनसमीक्षासमितिश्च, यस्या मार्गनिर्देशने एतत्प्रकाशनकार्यं सुसम्पन्नमिति सर्वेषामपि समितिसदस्यानां शोधप्रकाशनविभागीयानाञ्च कृते कृतज्ञतां मदीयां निवेदयामि।

इत्थं श्रीवेङ्कटेशस्य कृपाकटाक्षेण विश्वविद्यालयेन निर्विघ्नतया सुरभारतीसेवेयं सदैव प्रवर्ततामित्याशया पुनरपि भगवते मदीयान् प्रणामान् संसूच्य महस्विनीयमागामिनि काले प्रकाश्यमानैः कुसुमैः स्वज्ञानसुरभिणा लोकान् रञ्जयन्ती इतोऽपि महनीयतां प्राप्नुवन्ती च समेषां प्रीतिकरा भवत्वीति कामयते।

इत्थम्
सुबुधबुधजनविधेयः

**(आचार्यः श्रीगुल्लपल्लि रामकृष्णमूर्तिः)**

# महस्विनी

## (तिरुपतिस्थराष्ट्रियसंस्कृतविश्वविद्यालयशोधपत्रिका)

१. एषा षाण्मासिकी शोधपत्रिका।

२. अस्या: प्रकाशनं प्रतिवर्षं जनवरी–जुलाईमासयो: भवति।

३. अस्या: प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेरुद्बोधनं प्रोत्साहनं विविध–दृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च।

४. अस्यां तिरुपतिस्थराष्ट्रियसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धा: प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादन–भावानुवाद–टिप्पण्यादिपुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशितनिबन्धस्य प्रतिमुद्रणानि पत्रिकायाश्च स एव अङ्क: लेखकाय नि:शुल्कं दीयते, यस्मिंस्तदीयो निबन्ध: प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृतवाङ्मयसम्बद्धानां विविधासु भाषासु प्रणीतानां ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। तदर्थं द्वे प्रकाशितप्रतिकृती प्रेषयितव्ये। आलोच्यग्रन्थस्य समालोचना यस्मिन्नङ्के प्रकाशिता सोऽप्यङ्को ग्रन्थकर्त्रे नि:शुल्कं दीयते, समालोचना–पत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्या वार्षिकशुल्कं रू.२५५/–, द्विवार्षिकशुल्कं रू.४२५/–, त्रिवार्षिकशुल्कं रू.६८०/– सन्ति, इदं शुल्कं **कुलसचिव:, राष्ट्रियसंस्कृतविश्वविद्यालय:, तिरुपति:, आन्ध्रप्रदेश:–५१७५०७** इति सङ्केतेन बैंकड्राप्ट द्वारा प्रेषणीयम्।

९. पत्रिकासम्बन्धी सर्वविध: पत्रव्यवहार: **सम्पादक:, महस्विनी–शोधपत्रिका, राष्ट्रियसंस्कृतविश्वविद्यालय:, आन्ध्रप्रदेश:, तिरुपति:–५१७५०७** इति सङ्केतेन विधेय:।

— **सम्पादक:**

**सू.** — शोधलेखप्रणेतार: यथाकालं स्वकीयान् संस्कृताङ्ग्लभाषाप्रणीतान् शास्त्रविषयकान् अनुसन्धानलेखान् प्रेषयन्तु, यथावसरं सम्पादकमण्डलस्यानुशंसानुरूपं लेखा: प्रकाशयिष्यन्ते।

# सम्पादकीयम्

संस्कृतवाङ्मये अनुसन्धानस्य क्षेत्रं व्यापकं वर्तते। प्राचीनैर्महर्षिभि: प्रतिपादितविषयेषु नवीनतत्त्वान्वेषणम् उत प्रसङ्गानुसारं नवीनपदार्थस्य प्रतिपादनम् अनुसन्धानस्य द्वारमुद्घाटयति। स्वविकल्पानुसारं विद्वांस: काले काले समाजस्य अपेक्षानुसारं नवीनाविष्कारं कुर्वन्त एव भवन्ति अकृषत च। भाषाक्षेत्रे प्रायोगिकक्षेत्रे च अनुसन्धानस्य स्वरूपं भिन्नं भवितुमर्हति। परन्तु उभयत्रापि नवीनतत्त्वान्वेषणमिति समानं वर्वर्ति। संस्कृतं भाषाक्षेत्रे वर्तत इति कृत्वा व्याख्यानरूपम् अनुसन्धानं बहुधा व्यापकं स्थानमावहति। अत: संस्कृतवाङ्मये अभियुक्तै: प्राचीनकालादारभ्य अद्य यावत् नवीनतथ्यप्रतिपादकं व्याख्यानात्मकम् अनुसन्धानकार्यं विहितमस्ति। तर्हि ततोऽप्यधिकं नवीनं किं वा अवशिष्टमस्तीति केषाञ्चन शोधलेखकानां मनस्सु नूतनविषयमधिकृत्य लेखनावसरे अनुयोग: जागर्ति। परन्तु कस्यापि विषयस्य गभीरावलोकनेन वारं वारम् अधिगमनेन च विद्यमाने विषये नवीनचिन्तनं स्फुरति आहोस्वित् अवशिष्टं नवीनं तत्त्वं वा प्रादुर्भवति। अत: शोधलेखनात् पूर्वं कस्यापि विषयस्य कूलङ्कषमध्ययनम् अवश्यं क्रियते। येन समाजोपयोगि नवीनशोधकार्यं समेषां पुरस्तात् समायायात्।

एवमेव नूतनविषयप्रतिपिपादयिषितृणां शोधलेखकानां लेखान् बहुभ्य: वत्सरेभ्य: प्रकाशयन्ती शिक्षाक्षेत्रे महनीयं स्थानमावहति राष्ट्रियसंस्कृतविश्वविद्यालयेन प्रकाश्यमानेयं 'महस्विनी' सार्थकनामधेया शोधपत्रिका। अस्या: महस्विन्या: प्रकाश्यमानेऽस्मिन् कुसुमे विभिन्नशास्त्रेषु कृतपरिश्रमवताम् आचार्याणां शोधच्छात्राणां विदुषां च लेखा: प्रकाश्यन्ते।

एतेषां शोधलेखानां समीकरणे मूल्याङ्कने च नैकेषां विदुषां साह्यमनुसन्धान–प्रकाशनविभागेन प्राप्तमस्ति। एवमेव विश्वविद्यालयस्य कुलपतीनां प्रेरणया प्रोत्साहनेन च

इयं 'महस्विनी' अविच्छिन्नतया प्राकाश्यमेति। विश्वविद्यालयस्य शैक्षणकिसङ्कायप्रमुखाणां मार्गदर्शनं सन्दर्भेऽस्मिन् अस्माभिः प्राप्यत। तथा च सम्पादकमण्डलीसदस्याः अस्याः शोधपत्रिकायाः अन्तिमस्वरूपप्राप्तौ साह्यमदुः। विश्वविद्यालयस्य कुलसचिवसमेताः समे अधिकारिणः अस्याः प्रकाशने प्राशासनिकम् अपेक्षितं साहाय्यमकार्षुः। अतः अनुसन्धानविभागपक्षतः एतेभ्यः समेभ्यः धन्यवादान् वितनोमि।

**(आचार्यः शिवरामभट्टः)**

सम्पादकः, महस्विनी

# शोधलेखानुक्रमणी

**कुसुमम् :** जनवरी – जुलै २०२३ **सम्पुटम् :** प्रथमम्

# पञ्चमवेदाख्ये महाभारते ब्रह्मतत्त्वसमीक्षणम्

**डा. रा. सुब्रह्मण्य भिडे**

'भारतं पञ्चमो वेदः' इति ख्यातः महाभारतं नामाऽयं ग्रन्थः संस्कृतवाङ्मये सकलविश्ववाङ्मये च बृहत्तमः, शतसहस्रश्लोकात्मकः व्यासरचितः सकलश्रुति-स्मृतीतिहासपुराणसारः सकलजनसुलभः 'यदिहास्ति तदन्यत्र यन्नेहास्ति न कुत्रचित्' इत्यादि प्रशंसावाक्यान्वितः भारतीयसनातनसंस्कृतेः आधारभूतः सन् बोभवीतीति सर्वैः सुविदितमेव।

एतादृशे महत्त्वयुते महाभारते चतुर्विधपुरुषार्था अपि नैकैराख्यानैः संवादैश्च बहुत्र वर्णिताश्चर्चिताश्च। तेषु पुरुषार्थेषु मोख्याख्ये परमपुरुषार्थविषये वेदान्तेषु उच्यमाना अंशाः महाभारते कथमुच्यन्त इति उपलक्षणरूपेण केचन अंशाः अस्मिन् शोधलेखे प्रस्तूयन्ते।

१) महाभारते मोक्षधर्मपर्वणि ब्रह्मतत्त्वविचारसम्बद्धान् बहूनंशान् लभामहे। तत्र ब्रह्मसूत्रेषु – आदौ 'अथाऽतो ब्रह्मजिज्ञासा'[1] इति 'ब्रह्म जिज्ञास्य'मित्युक्त्वा, ततः 'किंलक्षणं तद्ब्रह्म' इति विचारे 'जन्माद्यस्य यतः'[2] इति सूत्रे लक्षितम्। नाम यतः यस्मात् अस्य जगतः जन्मस्थितिप्रलयाः सम्भवन्ति तदेव ब्रह्म इति। तत्र भाष्यकारैः श्रुतिवाक्यमपि प्रमाणत्वेन दत्तम्। यथा – 'यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्म।'[3] इति। स एषोंऽशः अत्र महाभारते एवमुच्यते –

---

[1] ब्र.सू. १.१.१

[2] ब्र.सू. २.१.१

[3] तै.उ. ३.१

**अक्षरं ध्रुवमेवोक्तं पूर्णं ब्रह्म सनातनम्।**
**...यतः सर्वाः प्रवर्तन्ते सर्गप्रलयविक्रियाः।**
**यच्च शंसन्ति शास्त्रेषु वदन्ति परमर्षयः।।**[1] इति।

२) तथा वेदान्तेषु – 'नेह नानाऽस्ति किञ्चन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति'[2] 'य एवं वेद अहं ब्रह्मास्मीति स इदं सर्वं भवति.. अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद'[3], 'द्वितीयाद्वै भयं भवति'[4] 'न तु तद्द्वितीयमस्ति'[5] 'यदा ह्येवेष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति'[6]। इति समस्तमिदं द्वैतं विश्वम् असदिति यदुच्यते, सोऽयमंशः इत्थं निरूप्यते महाभारते –

**अपां फेनोपमं लोकं विष्णोर्मायाशतैर्वृतम्।**
**चित्रभित्तिप्रतीकाशं नलसारमनर्थकम्।।**
**तमः श्वभ्रनिभं दृष्ट्वा वर्षबुद्बुदसंनिभम्।**
**नाशप्रायं सुखाद्धीनं नाशोत्तरमभावगम्।।**
**.... छित्त्वाऽऽशु ज्ञानमात्रेण तपोदण्डेन भारत।**
**.... तरन्ति यतयः सिद्धा ज्ञानयानेन भारत।।**[7] इति।

---

[1] मो.ध. ३०१.१०१,१०३
[2] क.उ. २.१.११
[3] बृ.उ. १.४.१०
[4] बृ.उ. ४.३.२३
[5] बृ.उ. ४.३.२३
[6] ते.उ. २.७
[7] मो.ध. ३०१.५९,६०,६२,७२

'इन्द्रो मायाभिः पुरुरूप ईयते'[1] इति श्रुतिवाक्यरीत्या परमेश्वरस्य बह्वीभिर्मायाभिः आवृतम्, अपां फेनोपमं, भित्तौ चित्रवत् स्थितं, सारहीनम्, अन्धकारे गर्तवत् स्थितं, वर्षजलबुद्बुदवत् स्थितं, नाशप्रायं, सुखहीनं, नाशात्परं भावरहितम् इमं द्वैतं लोकं (संसारं वा) सिद्धाः यतयः तपोदण्डेन ज्ञानशस्त्रेण ज्ञानयानेन तरन्तीति भावः।

३) एवञ्च 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति'[2] इति गीतोक्तरीत्या कर्मिणः चन्द्रलोके स्वेषां पुण्यफलभोगानन्तरं यथा इमं लोकमावर्तन्ते, तथा ज्ञानिनोऽपि 'इमं लोकमावर्तेरन्' इति शङ्कायां, 'तेषां न पुनरावृत्तिः'[3] 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते'[4], 'न च पुनरावर्तते'[5] इत्यादि श्रुतिवाक्यप्रमाणेन, ब्रह्मसूत्रेषु अन्तिमे 'अनावृत्तिः शब्दादनावृत्तिः शब्दात्'[6] इति सूत्रे ज्ञानिनां पुनरावर्तिर्नास्तीति सिद्धान्तितम्। स एषोंऽशः महाभारते एवं कथ्यते –

**विमुक्तः पुण्यपापेभ्यः प्रविष्टस्तमनामयम्।**
**परमात्मानमगुणं न निवर्तति भारत।।**[7] इति।

सम्यग्दर्शनेन विध्वस्ततमाः ज्ञानी पुण्यपापरहितः सन् निर्गुणं निर्विकारं तत् दुःखशोकादिरहितं परमात्मपदं प्रविष्टः इमं संसारं पुनर्न निवर्तत इति भावः।

---

[1] बृ.उ. २.५.१९
[2] भ.गी. ९.२१
[3] बृ.उ. ६.२.१५
[22] छा.उ. ४.१५.६
[5] छां.उ. ८.१५.१
[6] ब्र.सू. ४.४.२२
[7] मो.ध. ३०१.९७

४) एवं ब्रह्मसूत्रेषु प्रतिषेधाधिकरणे ब्रह्मज्ञानिनः (प्राणानां) गत्युत्क्रान्तयः न सन्तीति 'प्रतिषेधादिति चेन्न शारीरात्'[1] इत्यादिभिः सूत्रैः सिद्धान्तितम्। सोऽयमंशः महाभारते एवं स्मर्यते –

**सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः।**
**देवाऽपि मार्गे मुह्यन्ति अपदस्य पदैषिणः।।**[2] इति।

अत्र सर्वभूतात्मभूतस्य ज्ञानिनः गमनकाले अपदस्य तस्य मार्गे पदैषिणः सन्तः देवा अपि मुह्यन्तीत्युक्तत्वात् ज्ञानिनः गत्युत्क्रान्ती न स्तः इत्यंशः प्रतिपादितः।

**अत्र कश्चन आक्षेपः** – 'अस्मिन्नेव महाभारते शुकः किल वैयासिकिः मुमुक्षुरादित्यमण्डलमभिप्रतस्थे। पित्रा चागम्य आहूतो भो इति प्रतिशुश्राव'[3]। इति गतिरपि उक्ता खलु इति।

**अत्राऽयं परिहारः** - अयम् उत्क्रान्तेः पूर्वं सशरीरस्यैव योगबलेन विशिष्टदेशप्राप्तिपूर्वकः शरीरोत्सर्गः इति द्रष्टव्यम्, सर्वभूतदृश्यत्वाद्युपन्यासात्। न हि अशरीरं गच्छन्तं सर्वभूतानि द्रष्टुं शक्नुयुः । तथा च तत्रैव – शुकः वायोरपि शीघ्रगतिं प्राप्य अन्तरिक्षगः सन् ब्रह्मभूतो जात इति उत्क्रान्तिरहितत्वेन एवमुपसंहृतम्-

**शुकस्तु मारुताच्छीघ्रं गतिं कृत्वाऽन्तरिक्षगाम्।**
**दर्शयित्वा प्रभावं स्वं ब्रह्मभूतोऽभवत्तदा ।।**[4] इति।

---

[1] ब्र.सू. ४.२.१२

[2] मो.ध. २६२.३२

[3] मो.ध. ३३३.२३,२४ श्लोकानां भावरूपं वाक्यमिदम्।

[4] मो.ध. ३३३.१९,२०

५) एवं ब्रह्मसूत्रेषु 'अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके'[1] इत्यत्र 'जीवः परमात्मनः अंशः' इति नाना प्रमाणवाक्यैः विचार्य सिद्धान्तितम्। अत्र जीवब्रह्मणोः ऐक्यत्वात् जैवेन दुःखेन परमात्मनोऽपि दुःखप्रसक्तिरिति सन्देहे एवं परिहारः – अविद्याप्रत्युपस्थापिते बुद्ध्याद्युपहिते जीवाख्ये अंशे दुःखायमानेऽपि तद्वान् ईश्वरो न दुःखायते। उदशरावादिकम्पनात् तद्गते सूर्यप्रतिबिम्बे कम्पमानेऽपि तद्वान् सूर्यः यथा न कम्पते तद्वदिति मन्तव्यम्। एवञ्चास्मिन् पूर्वोक्ते जैवेन दुःखेन परमात्मनो नास्ति दुःखित्वप्रसङ्गः इत्यत्र महाभारते एवं निरूप्यते –

**तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः।**
**.... न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा।।**
**कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते।**
**स सप्तदशकेनापि राशिना युज्यते पुनः।।**[2] इति।

अत्र उपरिवाक्येषु जीवब्रह्मणोः भेदो दृश्यत इति न मन्तव्यम्। अविद्यया भेददृष्टिं प्राप्तानां मतमनूद्य उपदेशार्थमेवमुच्यते परमात्मा, कर्मात्मा इति। वस्तुतः जीवस्यापि दुःखं नास्ति। यद्यस्तीत्यालोच्यते तर्हि अविद्यानिमित्तैव दुःखप्राप्तिः जीवस्य इति मन्तव्यम्। तथा च अविद्यानिमित्तजीवभावव्युदासेन जीवस्य ब्रह्मभावमेव प्रतिपादयन्ति वेदान्ताः 'तत्त्वमसि' (छा.उ.६.८.७) इत्येवमादयः। एवञ्च पूर्वस्मिन् श्लोके उक्तः पञ्चकर्मेन्द्रिय-पञ्चज्ञानेन्द्रिय-पञ्चप्राण-मनोबुद्धिसहितः सप्तदशकलिङ्गः अविद्याप्रत्युपस्थापितबुद्ध्याद्युपहितो जीव एव परमार्थतः असता मोक्षेण बन्धेन वा युज्यते न परमात्मेति भावः ।

---

[1] ब्र.सू. २.३.४३

[2] मो.ध. ३५१.१४,१५

६) तथा उपनिषत्सु 'अणीयान् ह्यतर्क्यमणुप्रमाणात्' (क.उ.१.२.८), 'नैषा तर्केण मतिरापनेया' (क.उ.१.२.९) इत्याद्युक्तरीत्या तर्केण परमात्मतत्त्वं ज्ञातुं न शक्यत इत्यत्र ब्रह्मसूत्रेषु 'तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः'[1] इति, तथा 'श्रुतेस्तु शब्दमूलत्वात्'[2] इत्यत्र सूत्रेषु च विचार्यते। तदेतस्मिन्नंशे महाभारते इमानि वाक्यानि पश्यामः-

**तत्र तत्र हि दृश्यन्ते धातवः पञ्चभौतिकाः।**
**तेषां मनुष्यास्तर्केण प्रमाणानि प्रचक्षते।।**
**अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेत्।**
**प्रकृतिभ्यः परं यत्तु तदचिन्त्यस्य लक्षणम्।।**[3] इति।

७) महाभारते जीवस्य मरणादिविचारः - यद्यपि अयमंशः आपाततः वेदान्ततत्त्वेषु नान्तर्भूतः इति भासते तथापि वेदान्ततत्त्वविचारात् बहिर्भूय न वर्तत इति मत्वा अस्मिन् विषये महाभारते किमुच्यत इति अत्र किञ्चिद्विचार्यते – सनातनवैदिकसम्प्रदायेतरैः प्रकल्पिते देहत्यागानन्तरं जीवो म्रियत इति विचारे, यद्यपि गीतादिषु 'न जायते म्रियते वा कदाचित्' 'वासांसि जीर्णानि यथा विहाय' (भ.गी.२. २०,२२) इत्यादिवाक्येषु सत्स्वपि, तानि वाक्यानि आत्मपराणि, न जीवपराणि इति मन्यमानानां मूढानां महाभारते वनपर्वणि ब्राह्मणव्याधसंवादे न जीवो म्रियत इति सुस्पष्टमुच्यते-

---

[1] ब्र.सू. २.१.११
[2] ब्र.सू. २.१.२७
[3] भीष्म. ५.११,१२

**न जीवनाशोऽस्ति हि देहभेदे मिथ्यैतदाहुर्म्रियतीति मूढाः।**
**जीवस्तु देहान्तरितः प्रयाति दशार्थतैवास्य शरीरभेदः।।**[1]

जीवनाशः कदापि न सम्भवति, जीवः देहात् पृथगभवत् इतिमात्रेण मूढाः 'म्रियत' इत्याहुः। वस्तुतः जीवः देहान्तरं गच्छति। देहभेद एव अस्य मरणमिति व्यवहारो लोके दृश्यत इति भावः।

८) एवञ्च, लोके पुण्यपापफलविचारे श्रद्धधानाः बहवश्चिचिन्तयन्ति, वदन्ति च यत् पूर्वजैः आचरितपापस्य फलम् अस्माभिः भुज्यते, एभिर्भुज्यत इत्येवंरूपेण। किन्तु तथ्यमिदमस्ति 'स्वकृतकर्मफलं स्वयमेव भुङ्क्ते' 'अन्यकृतकर्मफलम् अन्यो न भुङ्क्ते' इति महाभारतडिण्डिमः। तथा जीवः स्वकृतपुण्यपापकर्मभिः सुखदुःखानि अनुभोक्तुं तत्तच्छुभाशुभशरीराणि लभते। पुण्यकर्माणः पुण्यशीला जायन्ते। पापकृतः अधमा जायन्ते। पूर्वजन्मनि यादृशं कर्म आचरितं तादृश्या वासनया युक्तस्सन् जायते। जन्तुः स्वकृतानां तत्तत्कर्मफलानाम् अनुभोगार्थमपुण्यां योनिमापद्य, 'आतुरः अपथ्यं भुक्त्वा यथा दुःखी भवति' तथा निरन्तरं दुःखमनुभवन्, दुःखान्ते दुःखरहितसमयमेव सुखमिति मत्वा, कर्मणाम् अनिवृत्तबन्धत्वात् पुनः पुनः बहुदुःखितः चक्रवत् संसारे परिक्रामतीति एभिर्वाक्यैः विशद्यते-

**अन्यो हि नाऽश्नाति कृतं हि कर्म मनुष्यलोके मनुजस्य कश्चित्।**
**यत्तेन किञ्चिद्धि कृतं हि कर्म तदश्नुते नास्ति कृतस्य नाशः।।**
**सुपुण्यशीला हि भवन्ति पुण्या नराधमाः पापकृतो भवन्ति।**
**नरोऽनुयातस्त्विह कर्मभिः स्वैस्ततः समुत्पद्यति भावितस्तैः।।**

[1] वन. २०९.२६

**जन्तुस्तु कर्मभिस्तैस्तैः स्वकृतैः प्रेत्य दुःखितः ।**
**तद्दुःखप्रतिघातार्थमपुण्यां योनिमाप्नुते ।।**
**ततः कर्म समादत्ते पुनरन्यन्नवं बहु ।**
**पच्यते तु पुनस्तेन भुक्त्वाऽपथ्यमिवातुरः ।।**
**अजस्रमिव दुःखान्तेऽदुःखितः सुखसंज्ञकः ।**
**ततोऽनिवृत्तबन्धत्वात्कर्मणामुभयोरपि ।।**
**परिक्रामति संसारे चक्रवद्बहुवेदनः ।।**[1] इति ।

९) एवञ्च महाभारते 'ज्ञानादेव मोक्षः' 'सर्वं विश्वं ब्रह्मैव' 'मुक्ताः परमात्मान एव भवन्ति' 'यद्यद्दृयं पश्यामः तत्सर्वं परमात्मसृष्टा माया' इति बहूनि वेदान्ततत्त्वानि तत्र तत्र उच्यन्ते। यथा – 'ज्ञानान्मोक्षो जायते राजसिंह' (मो.ध.३१८.८७), 'सर्व विश्वं ब्रह्म चैतत् समस्तम्' (मो.ध. ३१८.८९),

**यं प्रविश्य भवन्तीह मुक्ता वै द्विजसत्तमाः ।**
**स वासुदेवो विज्ञेयः परमात्मा सनातनः ।** (मो.ध.३३९.२५)
**माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद**(मो.ध.३३९.४५) इत्यादिभिः ।

१०) तथा च वेदान्तेषु 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादिषु वाक्येषु जीवपरतया परमात्मोपदेश: यथा श्रूयते, तथा महाभारते विशिष्य 'अहं हि जीवसंज्ञातो मयि जीवः समाहितः' (मो.ध.३३९.४७) इति, 'अहमेव जीवः' इति परमात्मना एव जीवोपदेशः स्मर्यते। यद्यप्यत्र 'ममैवांशो जीवलोके जीवभूतः सनातनः' (भ.गी.१५.७) इति गीतायाम् उक्तञ्चेदपि अंशशब्दात् भेदं मन्यमानानां मुग्धानाम् 'अहमेव जीवसंज्ञया अस्मी'ति परमात्मवाक्यं सुस्पष्टं ब्रवीति। एतेन 'जीवब्रह्मणोर-

[1] वन. २०९.२७,२८,३५-३७

भेदविषये कश्चनापि सन्देहलेशो मनसि न निधेय' इति जीवपरमात्मपक्षाभ्यामु-भाभ्यामपि उक्तं सत्, अविचाल्यमानो दृढतमो विचार: उपस्थापितो भवति।

११) एवमेतावता वेदान्ततत्त्वविचारे, वेदान्तेषु प्रतिपादिताः केचन अंशा: महाभारते कथं प्रतिपादिता इति सप्रमाणं विमृष्टा अत्र।

**धर्मे चाऽर्थे च कामे च मोक्षे च भरतर्षभ।**
**यदिहास्ति तदन्यत्र यन्नेहास्ति न कुत्रचित्।।**

इत्युक्तरीत्या महाभारते, 'सर्वेषु पुरुषार्थेषु विस्तरेण उपदिष्टेषु सत्स्वपि' विशिष्य, 'परमार्थतया एक एव पुरुषार्थो मोक्षः' इति विस्तरेण निरूपित: सन् 'महत्त्वात् भारवत्त्वाच्च महाभारतमुच्यते' इति सार्थकनामाऽयं महाभारतग्रन्थः सकलजगतां दुःखनिवारकः सन् नितरामुपकरोतीति शम्।।

**परामृष्टग्रन्थाः**

1. ब्रह्मसूत्रशाङ्करभाष्यम् -
2. महाभारतम् (वनपर्व) Vol.2 - Translator : R.N.Shastri Pandeya, 12th Edition, Vikrama Samvatsara -2065, Gita Press, Gorakhpur, U.P.
3. महाभारतम् (भीष्मपर्व) Vol.3 - Translator : R.N.Shastri Pandeya, 11th Edition, Vikrama Samvatsara -2065, Gita Press, Gorakhpur, U.P.
4. महाभारतम् (मोक्षधर्मपर्व) Vol.5 - Translator : R.N.Shastri Pandeya, 13th Edi. Vikrama Samvatsara 2065, Gita Press, Gorakhpur, U.P.
5. तैत्तिरीयोपनिषत् - Translator : Sri Sachchidaanandenra Sarasvati Swami, 3rd Edition - 1998, Adhyatmaprakas Karyalay, Holenaraseepur, Hasan Dist. K.A.State.

6. कठोपनिषत् - Translator : Sri Sachchidaanandenra Sarasvati Swami, 6th Edition – 2002, Adhyatmaprakas Karyalay, Holenaraseepur, Hasan Dist. K.A.State .
7. बृहदारण्यकोपनिषत् - Translator : Sri Sachchidaanandenra Sarasvati Swami, 2nd Edition - 1984, Vol. I & II, Adhyatmaprakas Karyalay, Holenaraseepur, Hasan Dist. K.A.State .
8. छान्दोग्योपनिषत् - Translator : Sri Sachchidaanandenra Sarasvati Swami, 2nd Edition – 1986, Adhyatmaprakas Karyalay, Holenaraseepur, Hasan Dist. K.A.State.

**डा. रा. सुब्रह्मण्य भिडे**
व्याख्याता,
श्रीवेङ्कटेश्वरवेदविश्वविद्यालयः, तिरुपतिः



# धूमकेत्वधिकरणम्

**आचार्यः वीरनारायण एन्. के. पाण्डुरङ्गी**

**अश्वं न त्वा वारवन्तं** वन्दध्या अग्निं नमोभिः । सम्राजन्तमध्वराणाम् ॥ १.०२७.०१
स घा नः **सूनुः शवसा पृथुप्रगामा सुशेवः** । मीढ्वाँ अस्माकं बभूयात् ॥ १.०२७.०२
स नो दूराच्चासाच्च नि मर्त्यादघायोः । पाहि सदमिद्विश्वायुः ॥ १.०२७.०३...........
स नो **महाँ अनिमानो धूमकेतुः पुरुश्चन्द्रः** । धिये वाजाय हिन्वतु ॥ १.०२७.११
स रेवाँ इव **विश्पतिर्दैव्यः केतुः** शृणोतु नः । उक्थैरग्निर्**बृहद्भानुः** ॥ १.०२७.१२
नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः ।
यजाम देवान्यदि शक्नवाम मा ज्यायसः शंसमा वृक्षि देवाः ॥ १.०२७.१३ इति समग्रं सूक्तम् ।

## विषयवाक्यम्

[1]**अश्वं न त्वा वारवन्तं** वन्दध्या अग्निं नमोभिः । सम्राजन्तमध्वराणाम् ॥[2] १.०२७.०१
अत्र प्रतिपाद्यः अग्निः अग्निदेवता धूमकेतुर्वेति संदेहः । तत्तल्लिङ्गानि बीजम् ।

## प्रथमः पूर्वपक्षः

अग्निर्देवता अत्र प्रतिपाद्येति प्रथमः पूर्वपक्षः ।
अश्वमिव त्वा वालवन्तम् । वाला दंशवारणार्था भवन्ति इति १.२० निरुक्तम् ।

---

[1] प्र तु द्रव परि कोशं नि षीद नृभिः पुनानो अभि वाजमर्ष ।
**अश्वं न त्वा वाजिनं** मर्जयन्तोऽच्छा बर्ही रशनाभिर्नयन्ति ॥ ऋग्वेदे ९.०८७.०१ तथा कौथुमीयसंहितापूर्वार्चिकः/छन्द आर्चिकः/1.1.6 षष्ठप्रपाठकः/1.1.6.4 चतुर्थी दशतिः ५२३ ॥

[2] आहवनीयाधाने अस्योपयोगः आपस्तम्बश्रौतसूत्रे ।

वालवान् योश्वस्तमिव त्वा वन्दध्यै वन्दितुमिच्छामः। स्कन्दः।

“अध्वराणां यज्ञानां "सम्राजन्तं सम्राड्वरूपं स्वामिनम् "अग्निं त्वां "नमोभिः स्तुतिभिः "वन्दध्यै वन्दितुं प्रवृत्ता इति शेषः। अत्र दृष्टान्तः। "वारवन्तं वालयुक्तम् "अश्वं “न अश्वमिव। अश्वो यथा वालैर्बाधकान् मशकमक्षिकादीन् परिहरति तथा त्वमपि ज्वालाभिरस्मद्विरोधिनः परिहरसीत्यर्थः॥ इति सायणाचार्यः।

1. 'तं वरुण उवाचाग्निर्वै देवानां मुखं सुहृदयतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति सोऽग्निं तुष्टावात उत्तराभिर्द्वाविंशत्या' (ऐ. ब्रा. ७.१६) इति। तथा च ब्राह्मणानुसारेण आग्नेयमेतत्।
2. प्रातरनुवाके आग्नेये क्रतौ गायत्रे छन्दसि एतदादिसूक्तद्वयमनुवक्तव्यम् । तथा च सूत्रितं- 'वसिष्वा हीति सूक्तयोरुत्तमामुद्धरेत्' (आश्व. श्रौ. ४, १३) इति आश्वलायनानुसारेण वसिष्वा हि मियेध्य इतिपूर्वसूक्तस्य अश्वं न त्वा इति प्रकृतसूक्तस्य च विनियोगात्।
3. वसिष्वा हि मियेध्य वस्त्राण्यूर्जां पते। सेमं नो अध्वरं यज॥ १.०२६.०१
   इत्यादिपूर्वसूक्तस्य आग्नेयत्वात्। तथैवास्यापि आग्नेयत्वात्।
   यच्चिद्धि शश्वता तना देवंदेवं यजामहे। त्वे इद्धूयते हविः॥ १.०२६.०६ इत्याद्युक्तेः होमाधिकरणत्वेन पूर्वोक्तस्य अग्नित्वात्। तथैवास्मिन्नपि सूक्ते उक्तस्याग्नित्वात्।
4. वसिष्वा हीति चाग्नेये ऋगग्नेर्मध्यमस्य तु।
   जराबोधेति विज्ञेया वैश्वदेव्युत्तमा नमः।। ९९ ।। इति वसिष्वा हि सूक्तस्य अश्वं न त्वा इति सूक्तस्य चाग्नेयत्वाभिधानात्। जराबोधेति ऋक्तु मध्यमाग्नेर्बोध्येत्यभिप्रायः।
5. आहवनीयाधाने अस्योपयोगः आपस्तम्बश्रौतसूत्रे। आहवनीये आधीयमाने बृहदभिगायते इत्युक्तत्वात्।

   तथा चैतैः कारणैः अयं प्रसिद्धाग्निदेवतैव इति **प्रथमः पूर्वपक्षः।**

## द्वितीयपूर्वपक्षः

नायम् अग्निः देवता,

1. अश्वसादृश्याभावात्। अत एव स्कन्दस्वामिनापि अश्वोपमानाभिप्रायः पर्येष्यः इति स्वकीये ऋग्वेदभाष्ये उक्तम्।
2. वारवत्त्वाभावात्। न ह्यग्नेर्वालाः दृश्यन्ते।
   अश्वो यथा वालैर्बाधकान् मशकमक्षिकादीन् परिहरति तथा त्वमपि ज्वालाभिरस्मद्विरोधिनः परिहरसीत्यर्थः। इति सायणाचार्येण तु अत्यन्तगौणतया वालवत्त्वमुपपादनीयम्।
3. स घा नः **सूनुः शवसा पृथुप्रगामा सुशेवः**। मीढ्वाँ अस्माकं बभूयात्॥ १.०२७.०२ इत्यत्रोक्तस्य पृथुप्रगामत्वस्य अग्नौ असंभवात्।
4. स नो **महाँ अनिमानो धूमकेतुः पुरुश्चन्द्रः**। धिये वाजाय हिन्वतु॥ १.०२७.११ इति अनिमानः धूमकेतुः पुरुश्चन्द्र इत्यादिविशेषणैः धूमकेतुरेव। अग्नेः अनिमानत्वाभावात्।
   स रेवाँ इव **विश्पतिर्दैव्यः केतुः** शृणोतु नः। उक्थैरग्निर्बृहद्भानुः॥ १.०२७.१२ इति अग्नेः केतुत्वोक्तेः इति आर नारायण ऐयंगारमहोदया[1] अभिप्रयन्ति।

## प्रथमपूर्वपक्षनिरासः

### नाग्निरत्र देवता

1. “अग्निर्वै देवानां नेदिष्ठस्तमेवोपधावेति सोऽग्निमुपससाराग्नेर्वयम्प्रथमस्यामृतानामिति एतयर्चा” इति प्रथमम् एकवारमग्नेः स्तुतिः कृता। पुनश्च “तं वरुण उवाचाग्निर्वै देवानाम्मुखं सुहृदयतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति सोऽग्निं तुष्टावात

---

[1] Iyengar R N, Comets & M showers in Rigveda, IJHS 2010

उत्तराभिर्द्वाविंशत्या" इति अग्नेः स्तुतिः अन्यथानुपपत्त्या भिन्नमेवाग्निं गमयति। अन्यथा एकवारमेव तस्य स्तुत्या कार्यसंभवे पुनरुपादानमनर्थकम्।

2. किंच अग्नेः पूर्वं नेदिष्ठः इति, इदानीं देवानां मुखं सुहृदयतमः इति विशेषणेन तयोर्भेदः प्रतीयते।

3. "इन्द्राग्नी वै देवानामोजिष्ठौ बलिष्ठौ सहिष्ठौ सत्तमौ पारयिष्णुतमौ" इति ब्राह्मणे पुनः इन्द्राग्न्योः विशेषणं दत्तम् अस्ति। एतान्येव विशेषणानि इन्द्रस्य दत्तानि सन्ति। तदपि विशेषणं भिन्नस्यैवाग्नेः।

4. सम्राजन्तमध्वराणाम् इत्युक्तं सम्राड्त्वमग्नौ नोपपद्यते।
तस्मान्नाग्निः इति **प्रथमपूर्वपक्षनिरासः**।

## द्वितीयपूर्वपक्षनिरासः

**नापि धूमकेतुरिति द्वितीयः पूर्वपक्षः**।

धूमकेतोः शुभाशुभसूचकत्वेपि यज्ञे तेषां पूजायाः अद्यापि संप्रदायाभावात्। नित्यत्वाभावात् धूमकेतोः।

1. **सम्राजन्तमध्वराणाम्** इत्युक्तं सम्राड्त्वं धूमकेतौ सुतरां नोपपद्यते। नाप्यग्नौ।
**राजन्तमध्वराणां** गोपामृतस्य दीदिविम्। वर्धमानं स्वे दमे॥ १.००१.०८
**पतिर्ह्यध्वराणामग्ने** दूतो विशामसि। १.०४४.०९
प्रत्नं होतारमीड्यं जुष्टमग्निं कविक्रतुम्। **अध्वराणामभिश्रियम्**॥ ८.०४४.०७
अग्निं वो वृधन्त**मध्वराणां पुरूतमम्**। अच्छा नप्त्रे सहस्वते॥ ८.१०२.०७
मन्द्रं होतारमुशिजो नमोभिः प्राञ्चं यज्ञं **नेतारमध्वराणाम्**।
विशामकृण्वन्नरतिं **पावकं हव्यवाहं** दधतो मानुषेषु॥ १०.०४६.०४
इत्यादिषु अध्वराणां राजन्तमित्याद्युक्तावपि अत्र अध्वराणां सम्राजन्तमिति विशिष्योक्तिः नाग्नौ भवति। नापि धूमकेतौ।

2. "तं वरुण उवा**चाग्निर्वै देवानाम्मुखं सुहृदयतम**स्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति सोऽग्निं तुष्टावात उत्तराभिर्द्वाविंशत्या" इत्युक्तस्य सुहृदयतमत्वस्य धूमकेतौ असंभवात्। नापि सहिष्ठत्वादिकं तत्र संभवति।
3. अश्वमिव वारवन्तमिति अश्वसाम्येन खलु धूमकेतोर्ग्रहणम्। परन्तु अश्वं न त्वा इति मात्रमेव मुख्यम्। तत्र वारवन्तमित्यस्यान्वयो नास्ति। अश्ववत् स्थितं वारवन्तं त्वा वन्दध्यै इत्येवान्वयात्। नात्र धूमकेतोः मुखादिभिः अश्वसाम्यम्। वालसाम्यमात्रात्। तथापि नात्र धूमकेतुरभिप्रेतः।[1] जलसंबन्धबोधकमिदम्। न धूमकेतौ तत्संबन्धः।

**सिद्धान्तः**

किन्तु और्वाग्निरत्राभिप्रेतः। वारां समूहो वारं सामुद्रोदकम्। तद्वान् वारवान्। अथवा वारो भक्तसमूहः तद्वान् वारवान् वाडवाग्निः। वारकीर इत्यपि प्रसिद्धं नाम वाडवाग्नेः त्रिकाण्डशेषकोषे। स च वडवामुखः। अत एव तस्याश्वसाम्यम्। अश्ववत् स्थितं अश्वमुखवन्तं वारवन्तं - वाडवाग्निं त्वां वन्दध्यै इत्यन्वयात्।

और्वाग्निश्च विष्णुस्थानमेवेति विष्णोरेवात्र स्तुतिः क्रियते।

नायमग्निः अग्नेः पूर्वमेव स्तुतत्वात्, अत्रोक्तस्याग्नेः पूर्वोक्ताग्निभिन्नत्वावश्यंभावात्।

**समुद्रवासस्त्वलिङ्गं वाडवाग्नेरेव**

**1.** अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः ॥ सम्राजन्तमध्वराणां ॥ १७ ॥
और्वभृगुवच्छुचिमप्नवानवदा हुवे ॥ अग्निं समुद्रवाससं ॥ १८ ॥

---

[1] वारवत्त्वस्य प्रकारान्तरेणोपपन्नत्वात्।
तथाहि - प्रजापतिरग्निमसृजत। सोऽश्वो वारो भूत्वा पराङैत्। तं वारवन्तीयेनावारयत तद्वारवन्तीयस्य वारवन्तीयत्वम् ॥ ब्रा ॥१।१।८।३ ॥ इति अग्नेरेव अश्ववारत्वोक्त्यापि तस्योपपत्तिसंभवात्।

अग्निमिन्धानो मनसा धियं सचेत मर्त्यः। अग्निमिन्धे विवस्वभिः॥ १९ ॥ कौथुमीयसंहितायां[1] "अश्वं न त्वा" इति मन्त्रस्य समुद्राग्निविषयेण "अग्निं समुद्रवाससम्" इति मन्त्रेण सहपाठेन अस्यापि वाडवाग्निविषयत्वावश्यंभावात्। ऋग्वेदेप्ययं त्रिरावृत्तो मन्त्रखण्डो दृश्यते वाडवाग्निविषयः -

और्वभृगुवच्छुचिमप्नवानवदा हुवे। **अग्निं समुद्रवाससम्**॥ ८.१०२.०४

हुवे वातस्वनं कविं पर्जन्यक्रन्द्यं सहः। **अग्निं समुद्रवाससम्**॥ ८.१०२.०५

आ सवं सवितुर्यथा भगस्येव भुजिं हुवे। **अग्निं समुद्रवाससम्**॥ ८.१०२.०६

अग्निं वो वृधन्त**मध्वराणां पुरूतमम्**। अच्छा नप्त्रे सहस्वते॥ ८.१०२.०७ इति। एते मन्त्राः तैत्तिरीये सं.॥३।१।११, एवं मैत्रायणीये ४.११.६७, काठकेपि ४०.१२५ दृश्यन्ते।

**तमर्वन्तं न** सानसिं गृणीहि विप्र शुष्मिणम्। मित्रं न यातयज्जनम्॥ ८.१०२.१२ इति स्पष्टमेव अश्वसादृश्यस्य समुद्रवाससः अग्नेः स्पष्टमेवोक्तेश्च। एतेषामपि मन्त्राणां प्रातरनुवाके आग्नेये क्रतौ विनियोगोक्तेः।

व्याख्याताश्चेमे मन्त्राः वाडवाग्निविषयतया सायणीये ऋग्वेदभाष्ये। मैसूरुपुस्तकेपि वाडवाग्निविषयतया व्याख्याताः।

किंचायमग्निः और्वेणोत्पादितः इति पुराणेष्वनुश्रूयते। तस्मात् और्वो यथा तमाह्वयति तथा आह्वयामीति स्वरसमौर्वादिपदोपादानम्। अन्यथा तु वैयर्थ्यमेव तेषां पदानाम्।

---

[1] पूर्वार्चिकः/छन्द आर्चिकः/१.१.१ प्रथमप्रपाठकः/१.१.१.२ द्वितीया दशतिः।

यद्यपि पृथगपि एते मन्त्राः कौथुमे पठ्यन्ते तथापि पूर्वोक्ताभिप्रायः अन्यत्रापि नेतुं शक्यते।

अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः। सम्राजन्तमध्वराणां॥ १६३४ ॥

स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः। मीढ्वां अस्माकं बभूयात्॥१६३५ ॥

स नो दूराच्चासाच्च नि मर्त्यादघायोः। पाहि सदमिद्विश्वायुः॥ १६३६ ॥ इत्यपि कौथुमे।

तथा अप्नवानस्यापि भार्गवस्य एतदग्निसंबद्धत्वादेव तदुल्लेखो युज्यते। अन्यथा वैयर्थ्यमेव। वत्सादिगोत्रेषु प्रवरप्रवर्तकोयम्- वत्सानां भार्गवच्यावनाप्नवानौर्व्यजामदग्न्याः इत्यादिरीत्या। विशेषो न ज्ञायते[1]।

**वातस्वनत्वं पर्जन्यक्रन्द्यत्वं च वाडवाग्नेरेव, भीकरत्वात्,** न तु आहवनीयस्येति ध्येयम्। समुद्र एव वासः परिधानं यस्येत्यर्थोपि संभावितः, तथापि अर्थभेदो न भवति।

**तैत्तिरीयभाष्ये तु एतेषां** मन्त्राणामुपहोमे विनियोग उक्तः। तथाहि - अथोपहोमार्थास्तिस्रो गायत्र्यः - और्वभृगुवदित्याद्याः। और्वाप्नवानौ भार्गवावृषी। यथा और्वो भार्गवोग्निमाह्वयत् यथा चाप्नवानः अग्निं तद्वदहमपि अग्निमाहुवे। समुद्रे वासो यस्य सः समुद्रवासाः। अन्तरिक्षे वसतीति केचित्। अपामाच्छादयितेत्यन्ये - इति भट्टभास्कराचार्यः। समुद्रे निवसन्तं हुवे इति सायणीये। अग्निना रयिमश्नवदित्यादिना तस्यानुवाकस्यारम्भो ज्ञेयः।

**कौथुमसंहितासायणभाष्ये तु**- समुद्रवाससम् - अन्तरिक्षनिवासिनम्। वैद्युतात्मा ह्यसौ तत्र निवसति। अथवा समुद्रशब्देन पार्थिवः समुद्रः उच्यते। तत्र ह्यसौ वडवात्मा निवसति। इति उभयथापि व्याख्यातम्।

आदित्प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरं। परो यदिध्यते दिवि ॥ २० ॥ इत्यपि मन्त्रो दृश्यते अस्मिन्नेव कौथुमसूक्ते, यश्च मन्त्रः दिवि दीप्यमानमग्निं प्रतिपादयतीति समुद्रवासा अपि दिवि वर्तमान एवेति आक्षेपः स्यात्। तथापि उभयोरेकत्वेन य

---

[1] अयमिह प्रथमो धायि धातृभिर्होता यजिष्ठो अध्वरेष्वीड्यः।
**यमप्नवानो** भृगवो विरुरुचुर्वनेषु चित्रं विभ्वं विशेविशे॥ ४.००७.०१
ध्रुवमग्निर्नो दूतो रोदसी हव्यवाड् देवामावक्षदध्वरे।
विप्रो दूतः परिष्कृतो यक्षश्च यज्ञियः कविः।
**अप्नवानवद् और्ववद्** भृगुवज् जमदग्निवद्...। ४,९.२ इति च खिलेपि और्वाप्नवानयोरुल्लेखो दृश्यते।

एवाम्भोधौ वर्तते स एव दिवि रूपान्तरेण वर्तते इति स्वीकारे न दोषः। अथ वा दिवः इति वा, दिवा इति वा पाठान्तराणि भाष्येषु दृश्यन्ते। तदनुसारेण दिवः परोपि स एवाग्निरिति विभाव्यम्।

किंच

बृहस्पते प्रति मे देवतामिहि मित्रो वा यद्वरुणो वासि पूषा।
आदित्यैर्वा यद्वसुभिर्मरुत्वान्स पर्जन्यं शंतनवे वृषाय॥ १०.०९८.०१ इत्यादिनारभ्यमाणे वर्षकामसूक्ते दृष्टौ

यं त्वा देवापिः शुशुचानो अग्न आर्ष्टिषेणो मनुष्यः समीधे।
विश्वेभिर्देवैरनुमद्यमानः **प्र पर्जन्यमीरया वृष्टिमन्तम्**॥ १०.०९८.०८
अग्ने बाधस्व वि मृधो वि दुर्गहापामीवामप रक्षांसि सेध।
अस्मात्समुद्राद्बृहतो दिवो नोऽ**पां भूमानमुप नः सृजेह**॥ १०.०९८.१२ इत्येतौ मन्त्रौ मैत्रायणीये और्वभृगुवत् इत्यादिभिः त्रिभिः मन्त्रैः सह पठितौ।

तथा-

आ ये तन्वन्ति रश्मिभिस्तिरः समुद्रमोजसा। मरुद्भिरग्न आ गहि॥ १.०१९.०८ इति मन्त्रोपि और्वभृगुमन्त्रेण सह पठितः मैत्रायणीये। तेन तत्सूक्तमपि वाडवाग्निविषयमिति ज्ञायते।

**तेन ज्ञायते अयं सामुद्रोग्निः वृष्टिप्रदाता** इति। अत एव अस्य प्रामुख्यं च वेदेषु इत्यनुमीयते।

अयं च समुद्रवासा अग्निर्विष्णुरेव, "यमन्तस्समुद्रे" "मम योनिरप्स्वन्तःसमुद्रे" इत्यादिना विष्णोरेव समुद्रवासत्वात्।

शिपिविष्ट अतपा अग्रज धर्मज धर्मनाभ गभस्तिनाभ चन्द्ररथ अपाप्मन् **त्वमेव समुद्रवास** अज एकपात् सहस्त्ररंभित महाशीर्ष सहस्त्रदृक् सहस्त्रपाद अयोमुख महापुरुष

सहस्रबाहो सहस्रमूर्ते सहस्राक्ष सहस्रप्रभव सहस्रशस्त्वामाहुर्वेदविदो वेदविदम्।। ३.३४४.११ इति विष्णुधर्मोत्तरे, गभस्तिनाभ शतक्रतुनाभ चन्द्र रथ सूर्यतेजः **समुद्रवासः अजः सहस्रशिरः** सहस्रपाद अधोमुख महापुरुष पुरुषोत्तम सहस्रबाहो सहस्रमूर्ते सहस्रास्य सहस्रसंभव सहस्रसत्त्वं त्वामाहुः। इति वामनपुराणे २६ अध्याये च विष्णोरेव समुद्रवासस्त्वोक्तेः स विष्णुः।

2. **अध्वराणां सम्राढ्वं विष्णावेव।** यज्ञो वै विष्णुरिति श्रुतेः, यज्ञो यज्ञपतिरिति विष्णुसहस्रनामसु, अथायजत यज्ञेशमिति भागवते च यज्ञाधिपतित्वस्य विष्णावेवोपपन्नत्वात्।

3. **महाँ अनिमानो धूमकेतुः पुरुश्चन्द्रः।** धिये वाजाय हिन्वतु।। इत्युक्त**मनिमानत्वं** मात्रया परे विष्णावेव उपपद्यते।

विष्णोस्तु **धूमकेतुत्वं** वाडवाग्नेरपि धूमजननात्। अथवा धूञ् कम्पने इति धातोर्निष्पन्नो धूमशब्दः गरुत्मन्तं वदति। स एव केतुर्यस्य सः गरुडध्वज एव धूमकेतुः।

धिये वाजाय हिन्वतु इत्युक्तं धीप्रदायकत्वमपि गायत्रीप्रतिपाद्ये विष्णावेव भवति।

4. **सूनुः शवसा पृथुप्रगामा सुशेवः।** मीढ्वाँ अस्माकं बभूयात्॥ १.०२७.०२ इत्यत्रोक्तस्य पृथुप्रगामत्वस्य विष्णौ उरुक्रमे एवोपपत्तेः धूमकेतुरयं विष्णुरेव।

5. स रेवाँ इव विश्पतिर्दैव्यः केतुः श्रृणोतु नः। **उक्थैरग्निर्बृहद्भानुः**॥ १.०२७.१२ इति बृहद्भानुत्वमुक्तम्। धूमकेतोस्तु न बृहद्भानुत्वम्, अस्मद्दृष्ट्या अत्यन्तमल्पकायत्वात्। नाप्यग्नेः इदमुपपद्यते। किन्तु विष्णोरेव।

6. समुद्राग्निविषयत्वादेव

विभक्तासि चित्रभानो **सिन्धोरूर्मा उपाक आ**। सद्यो दाशुषे क्षरसि॥ १.०२७.०६ इत्युल्लेखो दृश्यते। अन्यथा तस्य सर्वथा वैयर्थ्यमेव स्यात्। अपां गर्भस्त्वग्निरेव।

उदुस्रिया जनिता **यो जजानापां गर्भो** नृतमो यह्वो अग्निः॥ ३.००१.१२ इति,

अग्निं या गर्भं दधिरे विरूपास्तान आपः शग्ग् स्योना भवन्तु ॥ सं॥५।६।१ ॥ **इत्युक्तेः यः सामुद्रोदकेनैधते स एव और्वः अग्निः। तस्य किमपि वैशिष्ट्यं गीत**मृषिभिः वृष्ट्यादिप्रदत्वम्।

**7. तथा च पूर्वसूक्तमपि वाडवाग्निविषयमेव। तत्रापि**

वसिष्वा हि मियेध्य वस्त्राण्यूर्जां पते। सेमं नो अध्वरं यज॥ १.०२६.०१ इत्युक्तं वस्त्रवासनमपि तत्रैव। **तस्यैव वस्त्रवासनस्य**

**विष्णुरित्था परममस्य विद्वाञ्जातो** बृहन्नभि पाति तृतीयम्।

आसा यदस्य पयो अक्रत स्वं सचेतसो अभ्यर्चन्त्यत्र॥ १०.००१.०३

**स तु वस्त्राण्यध पेशनानि वसानो अग्निर्नाभा** पृथिव्याः। १०.००१.०६ इति सूक्तान्तरे विष्णुविषयतया स्पष्टत्वात्।

पूर्वसूक्ते त्वे इद्धूयते हविः इत्युक्तहवनाधारत्वमपि विष्णौ संभवति, तस्यैव सर्वहोमाधारत्वात्। सर्वहुतः इति पुरुषसूक्ते बहुवारमुक्तेः।

**महद्धयशिरो भूत्वा यत्तद्वेदविदो विदुः।**

तमग्निमुद्गिरद्वक्रात्पिबत्यापो महोदधौ॥ १-१७९-२२

तस्य **देवस्य यद्वक्रं समुद्रे तदधिष्ठितम्।**

**वडवामुखेति विख्यातं पिबत्तोयमयं हविः॥** ७-२०२-११४ इति वेदविदो विदुः, पिबत्तोयमयं हविः इति महाभारते उक्तेः तत्सर्वमुपपद्यते।

**8. आहवनीयाधाने अस्योपयोगोपि न साक्षात् उक्तः। किन्तु** आहवनीये आधीयमाने बृहदभिगायते इत्युक्तत्वात् बृहदाधारत्वेनैव। तत्तु ऋगन्तराश्रयणेनाप्युपपद्यते।

**9. प्रातरनुवाके आग्नेयक्रतौ विनियोगस्तु तावत् अग्न्यादिशब्दप्रयोगमात्रमाश्रित्य इति बोध्यम्।**

**10.** प्रातरनुवाकाश्विनशस्त्रयोः उत्तमावर्जितस्य सूक्तस्य विनियोग उक्तः इति सायणानुसारेण आश्विनशास्त्रे उपयुक्तमिदं सूक्तम्। परन्तु न सूत्रेषु तथोपलभ्यते। यद्येवं तथापि वाडवानुकूलमेवैतत्।

**11. स च नृसिंहरूपी अग्निः इति अनिष्टनिवृत्तिहेतोः तस्य स्तुतिरवश्यंभाविनी।**

''भूतादिभूतोम्बुनिधानमध्ये भूत्वा हरिस्सर्वहरोतिधाम्ना।
अगाधमम्भो विदधाति भस्म **यो वाडवाग्निर्नृहरिर्विचिन्त्यः**।।'' इति वैहायससंहिता-वचनमुदाहृतमाचार्यैः कर्मनिर्णये।

**एवं च शुनःशेपः वधपरिहाराय नृसिंहं तुष्टावेति सर्वमुपपद्यते।**

**शंकराचार्योपि अग्नितापजन्यदाहशान्तये नृसिंहं तुष्टावेति शंकरदिग्विजये दृश्यते[1]।**

अग्नेस्तु एकवारं स्तुतस्य पुनः नात्र स्तुतिरुपद्यते ब्राह्मणानुसारेण।

तथाच एतादृशसाहित्यपर्यालोचनया अयमग्निर्भिन्न एव विष्णुस्थानभूत इति निश्चीयते। अत एव विष्णुत्वेनैव तस्य निरूपणं बहुत्र दृश्यते। तथाहि-

**त्रिविक्रमस्तु मे देवः** सर्वपापानि कृन्ततु ।
तथा नारायणो देवो बुद्धिं पालयतां मम ॥ १,१९४.१४ ॥
शेषो मे निर्मलं ज्ञानं करोत्वज्ञाननाशनम् ।

---

[1] श्रीशंकराचार्यो दहनस्य शान्तये महान्तं शरणे साधु नरसिंहरूपमधोक्षजमधोऽक्षजन्यं ज्ञानं यस्मात्तं विष्णुमधिकं कलाभिर्लसन्ति पदानि यासु ताभिः स्तुतिभिः शीघ्रमतोषयत् । तथाहि ।
श्रीमत्पयोनिधिनिकेतन चक्रपाणे भोगीन्द्रभोगमणिरञ्जितपुण्यमूर्ते ।
योगीश शाश्वत शरण्य भवाब्धिपोत लक्ष्मीनृसिंह मम देहि करावलम्बम् ॥१ ॥ [ सर्गः ५९.१० ]
श्रीविद्यारण्यविरचितः श्रीमच्छंकर दिग्विजयः ।
अद्वैतराज्यलक्ष्मीटीकान्तर्गतविशेषविभागटिप्पणीभिस्तथा धनपतिसूरिकृतडिण्डिमाख्यटीकया च समेतः। आनन्दाश्रमसंस्कृतग्रन्थावलिः । ग्रन्थाङ्कः २२। १८९१ ॥ पृ.३९५

**वडवामुखो नाशयतां कल्मषं यत्कृतं मया** ॥ १,१९४.१५ ॥ गरुडपुराणे

शेषो भूत्वाहमेवैतां धारयामि वसुन्धराम्।

वाराहं रूपमास्थाय मयेयं जगती पुरा॥ ३-१८९-११

मज्जमाना जले विप्र वीर्येणासीत्समुद्धृता।

**अग्निश्च वडवावक्त्रो भूत्वाहं द्विजसत्तम॥** ३-१८९-१२

**पिबाम्यपः समाविद्धास्ताश्चैव**[सदा विद्वंस्ताश्चैवं] विसृजाम्यहम्। ३-१८९-१३

(ब्रह्माण्डपुराणे ५९.२१)

नारायणो लोकहितार्थं **वडवामुखो** नाम पुरा महर्षिर्बभूव तस्य मेरौ तपस्तप्यतः समुद्र आहूतो नागतस्तेनामर्षितेनात्मगात्रोष्मणा समुद्रः स्तिमितजलः कृतः स्वेदप्रस्यन्दन-सदृशश्चास्य लवणभावो जनितः॥ १२-३४२-६०

उक्तश्चाप्यपेयो भविष्यस्येतच्च ते तोयं **वडवामुखसञ्ज्ञितेन** पेपीयमानं मधुरं भविष्यति तदेतदद्यापि वडवामुखसञ्ज्ञितेनानुवर्तिना तोयं समुद्रात्पीयते॥ १२-३४२-६१ इत्यादि महाभारते।

एवमाभाषते लोको जलं वा नश्यतेऽखिलम् ।। ३९ ।।

**वडवामुखमास्थाय पिबामि तदहं जलम् ।।**

वायुं मायामयं कृत्वा मेघेषु विसृजाम्यहम्।। ४० ।। इति वराहपुराणे १२५ अध्याये।

श्रीभगवानुवाच

अहं नारायणो ब्रह्मन्सर्वभूतविनाशनः।

अहं सहस्रशीर्षाख्यो यः पदैरभिसंज्ञितः।। ५० ।।

अहं वर्षमहं सोमः पर्जन्योऽहमहं रविः।

क्षीरोदसागरे चाहं **समुद्रे वडवामुखः**।। ५८ ।।

**वह्निः संवर्तको भूत्वा पिबंस्तोयमयं हविः।**

अहं पुराणः परमं तथैवाहं परायणम्।। ५९।। इति मत्स्यपुराणे १६७ अध्याये। इत्यादिना पूर्वोक्तवचनेन वडवावक्रत्वस्य समुद्रवासस्त्वस्य विष्णोरेवोक्तेः स विष्णुरेव। **अपां नपातमवसे** सवितारमुप स्तुहि। तस्य व्रतान्युश्मसि॥ १.०२२.०६ इत्यादिनोक्तः अपांनपात् सविता इति न तस्यौर्वेण संबन्धो मृग्यः।

**वाडवाग्निस्वरूपम्**

पुत्रस्त्वग्नेर्मन्युमतो घोरः संवर्तकः स्मृतः ३५ ।
**पिबन्नपः स वसति समुद्रे वडवामुखः ।**
समुद्रवासिनः पुत्रः सहरक्षो विभाव्यते ३६ ।
सहरक्षसुतः क्षामो गृहाणां दहते नृणाम् ।
क्रव्यादग्निः सुतस्तस्य पुरुषानत्ति यो मृतान् ३७। ब्रह्माण्डपुराणे पूर्वभागे द्वितीयेनुषङ्गपादे १२ अध्याये।

अयमप्यग्निः मनुष्याणामत्यन्तं पूज्यः। अत एव **महाभारते वेदविदामुल्लेखेन तत्पूज्यत्वमुक्तम्।**

पितर ऊचुः
य एष मन्युजस्तेऽग्निर्लोकानादातुमिच्छति।
अप्सु तं मुञ्च भद्रं ते लोका ह्यप्सु प्रतिष्ठिताः॥ १-१७९-१७
आपोमयाः सर्वरसाः सर्वमापोमयं जगत्।
तस्मादप्सु विमुञ्चेमं क्रोधाग्निं द्विजसत्तम॥ १-१७९-१८
अयं तिष्ठतु ते विप्र यदीच्छसि महोदधौ।
मन्युजोऽग्निर्दहन्नापो लोका ह्यापोमयाः स्मृताः॥ १-१७९-१९
एवं प्रतिज्ञा सत्येयं तवानघ भविष्यति।

न चैवं सामरा लोका गमिष्यन्ति पराभवम् ॥ १-१७९-२० महाभारते।

वसिष्ठ उवाच

ततस्तं क्रोधजं तात और्वोऽग्निं वरुणालये।

उत्ससर्ज स चैवाप उपयुङ्क्ते महोदधौ ॥ १-१७९-२१

**महद्धयशिरो भूत्वा यत्तद्वेदविदो विदुः।**

**तमग्निमुद्गिरद्वक्त्रात्पिबत्यापो महोदधौ** ॥ १-१७९-२२[1]

महेश्वरश्च महतां भूतानामीश्वरश्च सः।

बहुभिर्बहुधा रूपैर्विश्वं व्याप्नोति वै जगत् ॥ ७-२०२-११३

तस्य **देवस्य यद्वक्त्रं समुद्रे तदधिष्ठितम्।**

**वडवामुखेति विख्यातं पिबत्तोयमयं हविः ॥** ७-२०२-११४ महाभारते।

---

[1] **वडवाग्निः पिबत्यम्भो** योऽसौ परमदारुणः। 3-219-20 इत्यङ्गिरसोपाख्याने

तत उत्पत्स्यतेऽस्माकं कुले गोत्रविवर्धनः।

ऊर्वो नाम महातेजा ज्वलनार्कसमद्युतिः ॥ 13-56-4

स त्रैलोक्यविनाशाय कोपाग्निं जनयिष्यति।

महीं सपर्वतवनां यः करिष्यति भस्मसात् ॥ 13-56-5

कञ्चित्कालं तु वह्निं च स एव शमयिष्यति।

समुद्रे वडवावक्रे प्रक्षिप्य मुनिसत्तमः ॥ 13-56-6

महेश्वरश्च लोकानां महतामीश्वरश्च सः।

बहुभिर्विविधै रूपैर्विश्वं व्याप्तमिदं जगत्।

**तस्य देवस्य यद्वक्त्रं समुद्रे वडवामुखम्** ॥ 13-161-29

(विष्णुप्रसादितो यज्ञः समुद्रो वडवामुखः।

हुताशनसहायश्च प्रशान्तात्मा हुताशनः ॥ 13-17-56 इति शिवसहस्रनामसु महाभारते)

ब्रह्मोवाच
वडवामुखेऽस्य वसतिः समुद्रे वै भविष्यति
मम योनिर्जलं विप्र तस्य पीतवतः सुखम् ५८
**यत्राहमास नियतं पिबन्वारिमयं हविः**
**तद्धविस्तव पुत्रस्य विसृजाम्यालयं च तत्** ५९
ततो युगान्ते भूतानामेष चाहं च पुत्रक
सहितौ विचरिष्यावो निष्पुत्राणामृणापहः ६०
एषोऽग्निरन्तकाले तु सलिलाशी मया कृतः
दहनः सर्वभूतानां सदेवासुररक्षसाम् ६१
एवमस्त्विति तं सोऽग्निः संवृतज्वालमण्डलः
प्रविवेशार्णवमुखं प्रक्षिप्य पितरि प्रभाम् ६२ इति च मत्स्यपुराणे १७५

**वाडवाग्नेः स्थानं दक्षिणसमुद्रः**
चक्रो बलाहकश्चैव मैनाको यश्च पर्वतः ।।
आयतास्ते महाशैलाः समुद्रं दक्षिणं प्रति ।। १८.७८ ।।
**चक्रमैनाकयोर्मध्य विदिशं दक्षिणां प्रति ।।**
**तत्र संवर्त्तको नाम सोऽग्निः पिबति तज्जलम् ।।** १८.७९ ।।
**नाम्ना समुद्रवासस्तु और्वः स वडवामुखः ।।**
द्वादशैते प्रविष्टा हि पर्वता लवणोदधिम् ।। १८.८० ।। ब्रह्माण्डपुराणे
मनोदृष्ट्या विलोक्याह सा तमंतःस्थमच्युतम् ॥
वाडवो यच्छति वरमहं तं प्रार्थयामि किम् ॥ ९८ ॥
ततस्तेन हृदिस्थेन प्रोक्ता देवी सरस्वती ॥

प्रार्थनीयो वरो भद्रे सूचीवक्रत्वमादरात् ॥ ९९ ॥
ततस्त्वभिहितो देव्या यदि मे त्वं वरप्रदः ॥
**ततः सूचीमुखो भूत्वा त्वं पिबापो** महाबल ॥ ७.१.३३.१०० ॥
एवमुक्तेन तत्तेन **सूचीवेधसमं** कृतम् ॥
**घटिकापूरणं यद्वत्पपौ** तद्वदनं जलम् ॥ १०१ ॥ इति स्कान्दे प्रभासखण्डे ३३ अध्याये।
अगाधेम्भसि तेनासौ निक्षिप्तो वाडवोऽनलः ॥
वरुणेन पिबन्नास्ते तज्जलं सुमहाबलः ॥ २५ ॥
तस्योच्छ्वासानिलोद्धूतं तत्तोयं सागराद्बहिः ॥
निर्मर्यादेव युवतिरितश्चेतश्चधावति ॥ २६ ॥ इति च स्कान्दे प्रभासखण्डे ३४ अध्याये ।
मध्ये तु प्रावृतं सर्वमस्मिन्मन्वंतरे प्रिये ॥
चक्रमैनाकयोर्मध्ये दिशि दक्षिणमुच्यते ॥ ९४ ॥
शातकुम्भमये कुम्भे धनुषायुतविस्तृते ॥
**तत्र कुंभस्य मध्यस्थो वडवानलसंज्ञितः** ॥ ९५ ॥
**सूचीवक्रो महाकायः** स जलं पिबते सदा ॥
एतदंतरमासाद्य अग्नितीर्थं प्रचक्षते ॥ ९६ ॥ इति २९ अध्याये प्रभासखण्डे अध्याये।

**अत्र दक्षिणदिशि नाम नास्मकं दक्षिणदिशि कन्याकुमारीसमीपे। किन्तु गुजरातराज्ये रणाख्यसमुद्रसमीपे, वैदिकानां तस्य दक्षिणत्वात्।**

"स्वादूदकान्तर्वडवानलोसो पाताललोकाः पृथिवीपुटानि" इति गोलाध्याये २३.
ततो देवाः सर्व एव ऋषयश्च तपोधनाः।
आत्मानं सफलं दष्ट्वा स्तवं चक्रुर्महेश्वरे ॥ २३.३५ ॥

नमस्ते परमात्मननन्तयोने लोकसाक्षिन् परमेष्ठिन् भगवन्महाविरिञ्च महाविभूते महाक्षेत्रज्ञ महापुरुष सर्वभूतावास मनोनिवास आदिदेव महादेव सदाशिव (५) ईशान

दुर्विज्ञेय दुराराध्य महाभूतेश्वर परमेश्वर महायोगेश्वर त्र्यम्बक महायोगिन् परब्रह्मन् परमज्योतिः ब्रह्मविदुत्तम ओङ्कार वषट्कार स्वाहाकार स्वधाकार परमकारण सर्वगत सर्वदर्शिन् सर्वशक्ते सर्वदेव अज (१०) सहस्रार्चिः पृषार्चिः सुधामन् हरधाम अनन्तधाम संवर्त संकर्षण **वडवानल** अग्नीषोमात्मक (२०) **समुद्रेशय** अत्रिसंभव ... प्रसीद भक्तजनवत्सल एवं स्तुतो देवगणैः सुभक्त्या सब्रह्ममुख्यैश्च पितामहेन। इत्यादि वामनपुराणे रुद्रस्तवेपि।

महासुरशिरोमालं महाप्रलयकारणम्।
ग्रसत्समुद्रनिहितवातवारिमयं हविः॥ १७.४ ॥
वडवामुखसङ्काशं महादेवस्य तन्मुखम्।
जिह्वाग्रेण जगत्सर्वं लेलिहानमपश्यत॥१७.५॥ वायुपुराणे रेवाखण्डे रुद्रमुखं वडवानलसंकाशमित्युक्तम्।

**Professor Veeranarayana N K Pandurangi**
Professor of Vedanta and Indian Philosophies
Dean of Vedanta Faculty,
Karnataka Samskrit University,
Pampa Mahakavi Road, Chamrajpet,
Bengaluru 560018



# माध्ववेदन्ते बन्धमोक्षौ - मोक्षे आनन्दतारतम्यञ्च

**आचार्यः नारायणः**

समयाः हि प्रवाहतोऽनादिनित्या इत्यभियुक्तोक्तेः सर्वाण्यपि दर्शनानि प्रवाहतोऽनादिनित्यानि। कस्मिंश्चित्कालघट्टे तत्तद्दर्शनस्याभ्युदयः समभूदिति भारतीयदर्शनपरम्पराभिज्ञा एव ज्ञातुं शक्नुवन्ति। अतः दर्शनानां पूर्वत्वापरत्वे तत्तद्दर्शनाभ्युदयसापेक्षे। तत्तद्दर्शनाभ्युदयकारणीभूतानां कालमपेक्ष्यैव दर्शनानामपि कालः निर्णीयते।

## दार्शनिकसम्प्रदायः

प्रायः स्तरत्रये दर्शनानां विकासः परिदृश्यते। परमार्थदिदृक्षुः कश्चन ऋषिः सुदीर्घकालेन तपसा यत्प्राप्नोति तन्मन्त्ररूपेणाभिव्यज्यते। अयं हि प्रथमस्तरः। मन्त्राणामर्थनिर्णयाय ऋषिकल्पःकश्चन सूत्राणि कारिकाः वा ग्रथयति। द्वितीयोऽयं स्तरः। अनेन हि दर्शनं किञ्चिदाविष्कारं गच्छति। सूत्राणि कारिकाः वा व्याख्यातुं बहवः ज्ञानिनः बहुधा प्रायतन्। पूर्वपक्षसिद्धान्तरूपेण तत्सम्प्रदायप्रवर्तकाः मतान्तरनिराकरणेन स्वाभिमतस्थापनार्थं भाष्याणि रचयामासुः। तदनुयायिभिः कालान्तरे सपरिष्कारं टीकाटिप्पण्यादयः व्यरचिषत।

## दर्शनानां विषयवस्तु

प्रत्येकस्यापि दर्शनस्यारम्भे तद्दर्शनस्य आरम्भणीयत्वसमर्थनं दृश्यते। अनुबन्धचतुष्टये सति आरम्भणीयत्वं दर्शनस्य नान्यथा। अधिकारी विषयः प्रयोजनं सम्बन्धश्चेति अनुबन्धचतुष्टयम्। प्रयोजनं ह्यात्यन्तिकसुखप्राप्तिः। सुखप्राप्तिः दुःखनिवृत्तिश्चेति द्वयमिदं जीवसामान्यापेक्षितम्। अनेन च जीवानां योऽयं जननमरणादिरूपसंसारः स दुःखस्वरूपेति सर्वसमयाभिमतं तत्त्वम्। अत एवालौकिकं

नित्यं सुखमाप्तुम् प्रापयितुं वा सर्वाण्यपि दर्शनानि प्रवृत्तानि। तत्र दु:खकारणं किम् ? तन्निवृत्त्युपाया: के ? किं वा नित्यं सुखम् ? तत्प्राप्त्युपाया: के ? इत्येतावदेवदेव दर्शनानां मुख्यं विषय:। एतदनुबन्धिनोऽन्येऽपि विषयास्सम्भवन्ति। तत्र इमे मुख्या: विषयास्सन्ति

**आत्मा**

चार्वाका: चैतन्ययुतं शरिरमेव आत्मा इति मन्यन्ते। बौद्धा: शरीरातिरिक्तमात्मानमङ्गीकुर्वन्ति चेदपि तं क्षणिकमाहु:। क्षणिकविज्ञानसन्तान एवात्मेति तन्मतम्। जैनास्तु ज्ञानेच्छाक्रियाश्रयमात्मानमङ्गीकुर्वन्ति। एवमेवास्तिक-दर्शनान्यपि शरीरातिरिक्तमात्मानं सुखाद्याश्रयत्वेन, ज्ञानाश्रयत्वेन, केचन ज्ञानस्वरूपत्वेन, अन्ये केचन सगुणत्वेन, निर्गुणत्वेन, एकत्वेनानेकत्वेन चात्मतत्त्वमुप-वर्णयन्ति ।

**अनात्मा**

समस्तोऽयं चेतनातिरिक्त: प्रपञ्च: अनात्मन्यन्तर्भवति। नास्त्यत्र दार्शनिकेषु विप्रतिपत्ति:। परिदृश्यमानोऽयं प्रपञ्च: पारमार्थिक इति चार्वाका: बौद्धैकदेशिन: जैना: न्यायवैशेषिका:, सांख्याश्च मन्यन्ते। विज्ञानवादिन:, शून्यवादिन:, अद्वैतवादिनस्तु प्रपञ्चस्य व्यावहारिकसत्यत्वमेवाभिप्रयन्ति। अनात्मत्वेनान्यै: परिगणितानि पुण्यपापाद्यदृष्टं, तत्कारणानि प्रारब्धागामिसञ्चितकर्माणि वा चार्वाका: नाङ्गीकुर्वन्ति। अन्ये बौद्धजैनादय: सत्कर्मणा पुण्यं दुष्कर्मणा पापं, पुण्यकर्मणा च सुखं, पापेन च दु:खमङ्गीकुर्वन्ति। “अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम्” इत्युक्तरीत्या इह जन्मनि जन्मान्तरे वा शुभाशुभकर्मणां फलमनुभोक्तव्यमेवेति सर्वाभिमतं तत्त्वम्। अनेन कृतप्रणाशस्याकृताभ्यागमस्य वा नावकाश: ।

जगत: कालदेशनियतत्वं उत्पत्तिविनाशनियतत्वं, कार्यकारणभावनियतत्वञ्च सर्ववादिसम्मतम्। सत्कार्यवाद:, असत्कार्यवाद:, विवर्तवाद:, परिणामवादश्चेति कार्यकारणभावमनेकरीत्या प्रतिपादयन्ति चेदपि प्रत्येकस्यापि कार्यस्य किञ्चित्कारणं भवत्येवेति समेषां दर्शनानामविप्रतिपन्नं तत्त्वम्।

**बन्ध: मोक्षश्च**

जननमरणयोश्चक्रमेव संसार इत्युच्यते। अयमेव हि संसार: बन्ध इति तस्माद्बहिरागमनमेव च मोक्ष इति च दार्शनिकानां परिभाषा। बन्धस्य कारणन्तु अविद्यैव। बन्धस्य, तत्कारणीभूताया अविद्यायाश्च स्वरूपविषये विवदन्ते दार्शनिका:। परन्तु अविद्याया: रागद्वेषदु:खादिमूलत्वं सर्वे मन्यन्ते। ज्ञानस्य मोक्षसाधनत्वन्तु बहुवादिसम्मतं तत्त्वम्। केचन कर्मणोऽपि मोक्षसाधनत्वमाहु:। यथा बन्धतत्कारण-स्वरूपयो: विवदन्ते तथा मोक्षस्वरूपे तत्कारणीभूतज्ञानस्वरूपे च।

**भूतबन्धस्तु संसार:**

यस्मिन् कल्पे ये जीवा: सृज्या: तत्कल्पपर्यन्तमनादितो रमामात्रप्रतीकतया ताञ्जीवानधितिष्ठति (सृष्ट्यनन्तरं तु रमामुख्यप्राणप्रतीका भवन्ति)। सृष्टिकल्पे तु दशेन्द्रियपञ्चभूतमनोरूपषोडशकलात्मकमव्यूढगुणत्रयात्मकं प्रकाशक्रियावरणलक्षण-शक्तियुक्तं (प्रकाशो हि सत्वस्य क्रिया हि रजस: आवरणं हि तमस:) सूक्ष्मतमं लिङ्गशरीरं क्षीरं नीरेणेव जीवचिता संवलितम्। तस्मिंश्च चिदचिन्मिश्रे पिण्डे एव जीवशब्दव्यवहारो यावत्परममुक्ति:। तत्रैव च न भेदप्रतिभासो विनाऽपरोक्षात्। यथा दीपो भूतान्तरसंवलितोऽपि तेजोऽप्रतिघं तथा सूक्ष्मगुणत्रयात्मिकाचिन्मिश्रिता चित्। तच्च न चितो विशेषतोपकारापकारक्षममिति द्वितीयेन महदहङ्कारभूतांशै: संयोज्य, भोगेन प्रारब्धं क्षपयित्वा, मोचयितुं दशेन्द्रियमन:-श्रद्धाकाश-वायु-तेजो-जल-पृथिव्यन्न-वीर्य-तपो-लोक-मन्त्र-नाम-कर्म-चिदात्मक-षोडशकलं स्थूलं शरीरं निर्माय स्वयं तत्र

जीवमङ्गारे वह्निमिव निवेश्य तेन सम्पद्यमानं पुण्यपापात्मकं वित्तं त्रिविधेभ्य: स्वपुत्रेभ्यो यथायोग्यं विभज्य दातुं कार्यकारणप्रेरकान् ब्रह्मरुद्रेन्द्रादीन् पुष्करान्तान्देवान्देवारींश्चाधिष्ठाय जीवानधितिष्ठति। न चानुबोभूयमानज्ञानानन्दस्वरूपे प्राकृतसुखादिभोगावसर इति तत्स्वरूपं मायाविद्यादिपदबोध्यया स्वेच्छारूपया लिङ्गशरीररूपया च प्रकृत्याच्छादितम्। न चैतावता शरीरेन्द्रियविषया भोगदानायालं सुप्त्यादौ तददर्शनात्। अतो येन सहकृता: शरीरादयो भोगदानक्षमा: तदेव मुख्यं बन्धकम्। तच्च विचार्यमाणे अभिमान एव भवति। सचाभिमान: अनेकविध:। यथा-

१. स्वगतस्वामित्वविशेषाज्ञानेन शरीरेन्द्रियमनोविषयकस्वामित्वाभिमान:
२. शरीरेन्द्रियेषु स्वात्मनो विशेषोपकारितया विशेषत: स्वामित्वाभिमान:
३. तस्माच्च शरीरधर्माणां कार्श्यकठिनत्वादीनामात्मगतत्वाभिमान:
४. स्वगतकर्तृत्वविशेषाज्ञानेनाहं कर्तेति कर्तृत्वस्वातन्त्र्याभिमान:
५. स्वगतभोक्तृत्वाभिमानेनाहं भोक्तेति फलभोक्तृत्वस्वातन्त्र्याभिमान:
६. स्वगतकारकस्वाम्यविशेषाज्ञानेन ममैव करणानीति कारकमुख्यस्वाम्यभिमान:
७. स्वगतफलस्वाम्यविशेषाज्ञानेन फलमपि ममेति क्रियाफलमुख्यस्वाम्यभिमान:
८. श्रीहरिभक्तिप्रसादावेव पुरुषार्थावित्यज्ञाननिमित्त: प्राकृतसुखे दु:खतुल्ये पुरुषार्थत्वाभिमान:
९. तत्साधने स्रक्चन्दनवनितादौ विषये पुरुषार्थसाधनत्वापरपर्यायशोभनत्वाभिमान: श्रीहरिभक्तिप्रसादसाधनमेव शोभनमित्यज्ञाननिमित्त:

एवं तत्तदज्ञानजनितै: कर्तृत्व-भोक्तृत्व-कारक-फलस्वाम्य-पुरुषार्थ-तत्साधनाभिमानै: भगवान् जीवे रागद्विषादिकमुत्पाद्य ज्ञानकर्मलक्षणं शरीरेन्द्रियसाध्यं व्यापारं कारयित्वा तेन कर्मणा नवीनशरीरादिदानद्वारा बध्नाति - तदुक्तमनुव्याख्याने

"चेतनस्य द्वयं भोग्यं संसारो मुक्तिरेव च संसारस्त्रिविधस्तत्र स्वर्गो मध्यस्तथाधमः। मुक्तिश्च द्विविधा तत्र सुखं नित्यं तथापरम्। नित्यदु:खमितिज्ञेयं साधनं संसृतावपि। काम्यकर्मनिषिद्धञ्च साज्ञानामितिनिश्चयः। द्वेषो भक्तिश्च मुक्तौ तु मुक्तिद्वयविधायकम्। इति पैङ्गिश्रुतेः"।

[1]जीवाः त्रिविधाः। सात्विकाः राजसाः तामसाश्च इति। सात्विका एव मोक्षयोग्याः। राजसाः नित्यसंसारिणः। तामसास्तु अन्धन्तमोयोग्याः। सात्विकजीवेष्वपि विभिन्नाधिकारिणः भवन्ति। मन्दाः मध्यमाः उत्तमाः इति।

---

[1] "अनिष्टादिकारिणामपि च श्रुतम्" ३-१-११-१३ इति सूत्रे सप्रमाणं नित्यसंसारिणां स्वरूपमुपवर्णितम्। तद्विषये भष्ये भाल्लवेयश्रुतिरपि उदाहृता। सा च -"तद्य इह शुभकृतो ये वाऽशुभकृतस्तेऽ-शुभमनुभूयाऽऽवर्तन्ते पुनः कर्म कुर्वन्ति पुनर्गच्छन्ति पुनरागच्छन्ति इति भाल्लवेयश्रुतिः"। "संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्" ३-१-११-१४। अनेन च सूत्रेण तामसजीवानां स्वरूपमुपवर्णितं भवति। तत्र च कौण्ठरव्यश्रुतिरुदाहृता। सा च "सर्वे वा एतेऽशुभकृतः संयमने प्रपतन्ति तत्र ये परद्विषो गुरुद्विषः श्रुतिद्विषस्तदवमन्तारः शठा मूर्खा इति वै ततोऽवरुह्य तमसि प्रपतन्ति नैवैते उत्तिष्ठन्तेऽपि कर्हिचिद्व्रं वा एतदित्याहुरथ येऽन्ये ब्रह्मद्विषः स्तेनाः सुरापा इति वै तदनुभूयेमं लोकमनुव्रजन्ति"। इति कौण्ठरव्यश्रुतिः "स्मरन्ति च" ३-१-११-१५ इति सूत्रेण त्रिविधजीवानां सत्वे स्मृतयोऽपि प्रमाणिताः "गच्छन्ति पापिनः सर्वे नरकं नात्र संशयः। तत्र भुक्त्वा पतन्त्येव ये द्विषन्ति जनार्दनम्॥ महातमसि मग्नानां न तेषामुत्थितिः क्वचित्। इतरेषां तु पापानां व्युत्थानं विद्यतेऽपि च ॥ सुखस्यानन्तरं दु:खं दु:खस्यानन्तरं सुखम्। इति सर्वत्र नियमः पञ्चकष्टे तु तत्सदा"॥ "अपि सप्त" ३-१-१२-१६ इति सूत्रेण नैकविधाः नरकाः समुपवर्णिताः। रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा। कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि तु॥ तामिस्रश्चान्धतामिस्रो द्वौ नित्यौ सम्प्रकीर्तितौ। इति सप्त प्रधानानि बलीयस्तूत्तरोत्तरम् ॥ एतानि क्रमशो गत्वैवाऽरोहोऽथावरोहणम् – भारते। "न तृतीये तथोपलब्धेः" इति तमसः स्वरूपमपि सप्रमाणं निरूप्यते अथाविद्वानकर्माऽवाग्गच्छति त्रिधा ह वाऽवाग्गतिस्तिर्यग्यातना तम इति। द्वे वाव सुखानुवृत्ते न तमः सुखानुवृत्तं केवलं ह्येवात्र दु:खं भवति" इति श्रुतेः। इति एवं त्रिविधानामपि जीवानां स्वरूप-गतिनिरूपणं विहितम्।

**मोक्ष:**

क: मोक्ष: ? किं वा मोक्षसाधनम् ? कथञ्च तत्प्राप्यत इति प्रमाणवचनै: किञ्चिदत्र प्रदर्श्यते। यथा स्कान्दे–

“बन्धको भवपाशेन भवपाशाच्च मोचकः।
कैवल्यदः परं ब्रह्म विष्णुरेव सनातनः ॥” इति।
“अज्ञानां ज्ञानदो विष्णु: ज्ञानिनां मोक्षदश्च स:।
आनन्ददश्च मुक्तानां स एवैको जनार्दन: ॥”
“यस्य प्रसादात्परमार्तिरूपादस्मत् संसारान्मुच्यते नापरेण॥”
“नायमात्मा प्रवचनेन लभ्य: न बहुधा श्रुतेन।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्” ॥[1]
“नावेदविन्मनुते तं बृहन्तं सर्वानुभुम् आत्मानं साम्पराये।
तमेवं विद्वानमृत इह भवति नान्य: पन्था अयनाय विद्यते ॥[2]
आत्मा वाऽरे द्रष्टव्य: श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्च ।[3]
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय:[4]
कर्मणा त्वधम: प्रोक्त: प्रसाद: श्रवणादिभि:।
मध्यमो ज्ञानसम्पत्या प्रसादस्तूत्तमो मत: ॥
प्रसादात्त्वधमाद्विष्णो: स्वर्गलोक: प्रकीर्तित:।
मध्यमाज्जनलोकादिरुत्तमस्त्वेव मुक्तिद: ॥

---

[1] क.उ. २-२३

[2] तै.आ. ३-१२

[3] बृ.उ. ६-५-६

[4] भ.गी ७-१७

श्रवणं मननं चैव ध्यानं भक्तिस्तथैव च।
साधनं ज्ञानसम्पत्तौ प्रधानं नान्यदिष्यते।
न चैतानि विना कश्चित् ज्ञानमाप कुतश्चन ॥[1]

इति सात्विकानां मोक्षाधिकारिणां मोक्षप्रदाता परमात्मा विष्णुरेव। तस्य प्रसादेनैव मोक्ष: भवति। स च प्रसाद: भगवदिच्छारूपा। सा च परमात्मज्ञानेनैव सम्पादनीया। तच्च ज्ञानं भगवदनुग्रहेणैव सम्पादनीयम्। मोक्षे प्राप्तेऽपि तत्र स्वरूपानन्दाविर्भावोऽपि तदनुग्रहेणैव भवति। तर्हि सर्वेष्वपि साधनस्तरेषु भक्तिर्नियता। भक्तिं विना, ज्ञानं वा प्रसादं वा नावाप्नोति। भगवद्भक्तिसम्पन्न: शमदमादिसंयुक्त: य: साधक: श्रवणमननादिकं विधाय भगवदपरोक्षज्ञानमाप्नोति स एव मोक्षसाधनीभूतं भगवत्प्रसादं सम्पादयति। नान्यत्साधनं मोक्षाय। इति मोक्षप्राप्तिप्रकारोऽपि अनेन प्रतिपादित:।

**अयमत्र सङ्ग्रह:**

भगवदपरोक्षज्ञानजनितभगवत्प्रसादसाध्य: मोक्ष:। भगवदपरोक्षो हि स्वयोग्यबिम्बदर्शनम्। तदेव हि मुख्यं मोक्षसाधनम्। तच्च परमभक्तिसहित-ज्ञानसाध्यम्। [2]परमा भक्तिश्च श्रवणमननादिजनितपरोक्षज्ञानसाध्या। सा च

---

[1] नारदीये ब्र.सू.भा १-१-१

[2] श्रवणं मननं चैव ध्यानं भक्तिस्तथादृशि:। ज्ञानञ्चोक्तविशेषाणां सर्वेषां साधनं भवेत्॥
त्यक्त्वैतानि न कस्यापि भवेन्मोक्ष: कथञ्चन। सर्वोत्तमतया ज्ञानपूर्वक: स्नेह एव तु।
भक्तिर्विष्णौ समुद्दिष्टा तदन्येषां तु योग्यत:॥ विष्णुभक्तिर्देवभक्तिर्गुरौ भक्तिस्तथैव च।
तत्तत् श्रैष्ठ्यानुसारेण मुक्तौ नियतसाधनम्॥ भक्तिपूर्तौ भवेन्मुक्ति: तदभावे च नो भवेत्।
भक्तिर्ज्ञानं तथा ध्यानं मुक्तानामपि सर्वश:॥ नियमेन न हीयन्ते मुक्तानां ते स्वरूपका:॥
साधनानि तु सर्वाणि भक्तिज्ञानप्रवृद्धये। नैवान्यसाधनं भक्ति: फलरूपाहि सा यत:॥
बृ. उ. भा. प्रथमाध्याय:

तरतमभावसहिता परमे ब्रह्मणि सर्वाधिका भवेत्। सात्विका एव जीवा मुक्तियोग्या:। न राजसा: न वा तामसा:। अधिकारिणोऽपि त्रिविधा: (स्वरूपभेद एवात्र उच्यते यतोह्ययं सात्विकानां मोक्षयोग्यानां विभाग:) मन्द-मध्यमोत्तमत्वेन। मनुष्येषु ये उत्तमगणा: ते मन्दा:। मध्यमा: ऋषिगन्धर्वा:। देवास्तत्रोत्तमा मता:। इति[1] (ब्र.सू.भा १-१-१-१)। मोक्षो हि स्वस्वरूपानन्दाविर्भाव:[2]। ज्ञानानन्दादि-स्वरूपा: जीवा: स्वभावत: तरतमभावसम्पन्ना:। अतो हि मोक्षात्पूर्वमुत्तरत्र च तरतमभाववन्त: एव जीवा:[3] तदुक्तं छान्दोग्यभाष्ये -

"………………नैषां पारावर्यमुच्छिद्यते कदाचन ।
नैषां पारावर्यमुच्छिद्यते कुतश्चन ।
परावर्येणैव ब्रह्मोपयन्ति। परावर्येणैव मुक्ता: सञ्चरन्ति। इत्यदिश्रुतेश्च"
(छा.भा.खण्डः १४)

ऐतरेयभाष्ये च –

"ज्ञानानन्दबलाद्येषु विष्णुभक्तौ च सर्वश:।
हीना शतगुणेनैव क्रमेणानेन ते मता: ॥

---

[1] मन्दमध्योत्तमत्वेन त्रिविधा ह्यधिकारिण:। तत्र मन्दा मनुष्येषु य उत्तमगणा मता: ॥
मध्यमा ऋषिगन्धर्वा देवास्तत्रोत्तमा मता:। इति जातिकृतो भेदस्तथान्यो गुणपूर्वक:।
भक्तिमान्परमे विष्णौ यस्त्वध्ययनवान्नर:। अधम: शमादिसंयुक्तो मध्यमस्समुदाहृत:।
आब्रह्मस्तम्बपर्यन्तमसारं चाप्यनित्यकम्। विज्ञाय जातवैराग्यो विष्णुपादैकसंश्रय: ॥
स उत्तमोऽधिकारी स्यात्सन्न्यस्ताखिलकर्मवानिति ॥

[2] मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थिति:। भा. २-१०-०६

[3] पूर्वसृष्टौ पूर्वजा ये तेऽधिका: सर्वतो गुणै:।
अनाद्यनन्तकालेषु मुक्तावपि यथाक्रमम्। इति निबन्धे" इति भा. ता. ११-१४-०४

तेभ्यश्च ऋषयो मर्त्या हीना एव क्रमेण च।
विशेषतस्तु मुक्तानां सर्वसंसारबन्धनात् ॥
क्रमोऽयं सम्यगुद्दिष्टो नित्यानन्दैकभोगिनाम्"।

ब्रह्मसूत्रभाष्ये-

"आत्मेत्येवं परं देवमुपास्य हरिमव्ययम्। केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन॥
अत्रैव च स्थितिस्तेषामन्तरिक्षे तु केचन। केचित्स्वर्गे महर्लोके जने तपसि चापरे॥
केचित्सत्ये महाज्ञाना गच्छन्ति क्षीरसागरम्। तत्रापि क्रमयोगेन ज्ञानाधिक्यात्समीपगाः॥
सालोक्यञ्च सरूपत्वं सामीप्यं योग एव च। इमामारभ्य सर्वत्र यावत्सु क्षीरसगरे॥
पुरुषोऽनन्तशयनः श्रीमन्नारायणाभिधः। मानुषा वर्णभेदेन तथैवाश्रमभेदतः॥
क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः। आजानजाः कर्मजाश्च तात्त्विकश्च शचीपतिः॥
रुद्रो ब्रह्मेति क्रमशस्तेषु चैवोत्तमोत्तमाः। नित्यानन्दे च भोगे च ज्ञानैश्वर्यगुणेषु च॥
सर्वे शतगुणोद्रिक्ताः पूर्वस्मादुत्तरोत्तरम्। पूज्यन्ते चावरैस्ते तु सर्वपूज्यश्चतुर्मुखः॥
स्वजगद्व्यापृतिस्तेषां पूर्ववत्समुदीरिता। सयुजः परमात्मानं प्रविश्य च बहिर्गताः॥
चिद्रूपान्प्राकृतांश्चापि विना भोगांस्तु कांश्चन। भुञ्जते मुक्तिरेवं ते विस्पष्टं समुदाहृते" ति।
(ब्र.सू.भा. ४-४-९-१९)

**मुक्तिगेषु ब्रह्मैव प्रथमः**

"ब्रह्मैव मुक्तिगेष्वादिः सुरास्तदवरोत्तमाः।
मध्यमा ऋषिगन्धर्वाश्चरमा मानुषोत्तमाः॥ इति प्रभावल्याम्" इति भा. ता. १० (उ)-९४

स्पष्टमिदं प्रतिपादितं तैत्तिरीयोपनिषदि आनन्दमीमांसाप्रकरणे "सैषानन्दस्य मीमांसा भवति" इत्यादिना एवं द्वैतदर्शने श्रुतियुक्तिभिः जीवस्वरूप-बन्ध-मोक्षाद्यानि

तत्त्वानि इतरदर्शनाभिमततत्त्वविमर्शनपूर्वकं सुस्पष्टं निरूपितानीति जिज्ञासवः तदध्ययनेनाधिगन्तुं शक्नुवन्ति ।

Key words : माध्वदर्शनम्, जीवः, बन्धः, मोक्षः, तारतम्यम्, संसारः, प्रकृतिः, ब्रह्म, स्वस्वरूपानन्दः, सात्विकाः, राजसाः, तामसाः, मन्दाः, मध्यमाः, उत्तमाः ।

**परिशीलितग्रन्थाः**

१. ऐतरेयोपनिषद्भाष्यम् – मध्वाचार्याणाम्
२. बृहदारण्यकोपनिषद्भाष्यम्
३. तैत्तिरीयोपनिषद्भाष्यम्
४. ब्रह्मसूत्रभाष्यम् –
५. श्रीमद्भागवततात्पर्यम्
६. महाभारततात्पर्यनिर्णयः
७. षोडशी-चतुर्दशी – श्रीमज्जयतीर्थार्यविरचितम् – प्रकाशकः जि.आर्. सवणूर् – १९३६

**आचार्यः नारायणः**
प्राध्यापकः विभागाध्यक्षश्च द्वैतवेदान्तविभागः
राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः
nspm12@gmail.com, 9490077161



**महस्विनी – विद्वन्मण्डलीसमीक्षिता परामृष्टा च शोधपत्रिका (ISSN: 2231-0452)**
**कुसुमम् :** जनवरी - जुलै २०२३ **सम्पुटम् :** प्रथमम्

# ज्योतिश्शास्त्रानुगुणं मोक्षविचारः

**अप्पुक्रिष्णा वि.**

**शोधसारः**

मानवजीवनस्य अन्तिमं लक्ष्यं तावत् मोक्षेति परिगण्यते। मानवमनः कामाद्याकाङ्क्षादिभिः सम्मिश्रमित्यतः चित्तवृत्तीनां नियन्त्रणं कष्टसाध्यं वर्तते। इच्छाकामादिभ्यो मुक्तिः अतीव क्लिष्टकरमेव। मुक्तिं विना मानवस्य मोक्षसिद्धिः न भवत्येव। मानवाः स्वीयचित्तवृत्तिनाम् अनियन्त्रितस्वभावात् सङ्घर्षपूर्णजीवनं यापयन्ति। यावत् मानवेषु सहजता, स्वाभाविकता, आत्मविवेकः, आध्यात्मिकचिन्तनम्, बुद्धिपूर्णविवेचनम्, सत्कर्मभावाः नोद्भवन्ति तावत् तेषां कामादिवासनाः न समाप्यन्ते, यस्मान्मोक्षः न सिद्ध्यति। मनुष्याणां चित्तवृत्तिः मायया निमीलिता वर्तते इत्यतः ते स्वस्य वास्तविकं स्वरूपं विस्मरन्ति। यदा पुरुषः सात्विकं ज्ञानं प्राप्नोति तदा मायावरणं विच्छिद्य स्वस्वरूपम् अभिजानाति। अवस्था इयं मोक्षः इति उच्यते। कर्मज्ञानभक्तिश्चेति मोक्षप्राप्त्यर्थं मुख्यतया त्रयः मार्गाः सन्ति। एतेषु कस्याप्येकस्य मार्गस्य अनुसरणात् मानवः मोक्षं प्राप्तुमर्हति। पत्रेऽस्मिन् ज्योतिषशास्त्रानुगुणं मोक्षविषये मोक्षसिद्धये मार्गत्रयविषये च सविस्तरं प्रतिपाद्यन्ते।

**कूटशब्दाः –** मोक्षः, पुरुषार्थः, जीवन्मुक्तिः, गुणत्रयम्, कैवल्यम्, आश्रमः।

मानवजीवनस्य आत्यन्तिको लक्ष्यः 'संसारदुःखनिवृत्यात्मको मोक्षः' इति सर्वसम्मतं भवति। धर्माद्याचरणानाम् आत्यन्तिकोद्देशः मोक्षः एव। वेदादीनाम् अध्ययनशिक्षणस्यापि परमं लक्ष्यं मोक्ष एवेत्यतः सज्जनाः अपि अन्ते मोक्षम् इच्छन्ति। अत एव अन्तिमपुरुषार्थत्वेन मोक्षः समाविष्टः।

आध्यात्मिकधार्मिकजीवनयापनं सम्पूर्णतया अतीव कठिनम्। यतो हि मानवमनः कामाद्याकाङ्क्षादिभिः कलुषितमस्ति। अत एव चित्तवृत्तीनां नियन्त्रणम् उत तन्निरोधः दुष्करं भाति। एतेभ्यः इच्छाकामादिभ्यो मुक्तिः अतीव कठिना। एवं मुक्तिं विना मानवस्य निवृत्तिं प्रतिगमनम् अर्थात् मोक्षसिद्धिः न भवति।

मानवाः स्वचित्तवृत्तिनाम् अनियन्त्रितस्वभावात् सङ्घर्षपूर्णजीवनं यापयन्ति। यावत् मानवेषु सहजता, स्वाभाविकता, आत्मविवेकः, आध्यात्मिकचिन्तनम्, बुद्धिपूर्णविवेचनम्, सत्कर्मभावाः नोद्भवन्ति तावत् तेषां कामादिवासनाः न समाप्यन्ते यस्मान्मोक्षः न सिद्ध्यति।

प्रायः वृद्धावस्थायां पुरुषः लौकिकभोगान् त्यक्त्वा आध्यात्मिकचिन्तनं प्रति गच्छति। धर्मस्य अध्यात्मस्य च साहाय्येन परब्रह्मज्ञानं प्राप्नोति। यदा जीवात्मा परब्रह्मणि लीनो भूत्वा संसारबन्धनात् मुक्तः भवति तदा मोक्षं प्राप्नोति। जीवात्मनः परमात्मना सह तादात्म्येन परमानन्दप्राप्तिः भवति। जीवात्मा सीमितः परमात्मा च अनन्तः। मोक्षेण अनन्तता इत्यर्थः समायाति। वैदिकशास्त्रानुसारं मोक्षः परमज्ञानं परमानन्दः च। यत्र जीवात्मा परब्रह्म प्राप्य संसारचक्रात् मुक्तः भवति।

सामान्यतया 'जीवनात् मुक्तिः' इति मोक्षस्य अर्थः। वस्तुतः 'मोक्षस्य' अर्थः 'आत्मनः मुक्तिः' इति प्रमाणम्। मानवानां प्रवृत्तयः सत्वरजस्तमोगुणभेदैः नियन्त्रिताः वर्तन्ते। यदा पुरुषस्य बुद्धिः सात्विकभावे निमग्नो भवति तदा सः राजसी-तामसीप्रवृत्तिभ्यः मुक्तः भूत्वा मोक्षं प्रति आकृष्टः भवति।

प्रायः मनुष्याणां मनोबुद्धिः प्रकृत्या (मायया) आच्छादिता वर्तते। तस्मात् मानवाः स्वस्य वास्तविकं स्वरूपं विस्मरन्ति। यदा पुरुषः सात्विकं ज्ञानं प्राप्नोति तदा मायावरणं विच्छिद्य स्वस्वरूपं पश्यति। एतत् 'कैवल्यम्' अथवा मोक्षः इति उच्यते। प्रकृतिपुरुषयोः वास्तविकसम्बन्धः आत्मना सह मेलनमित्यर्थः।

अज्ञानस्य परित्यागेन ज्ञानात्मकं यथार्थस्वरूपं ज्ञातुं शक्यते। रजस्तमोगुणयोः अभावात् सत्वगुणं स्थिरतां प्राप्य सज्ज्ञानस्य प्राप्तिः भवति। स एव मोक्षः।

**मोक्षस्य मार्गः**

कर्म, ज्ञानं, भक्तिश्चेति मोक्षप्राप्त्यर्थं मुख्यतया त्रयः मार्गाः सन्ति। एतेषु कस्याप्येकस्य मार्गस्य अनुसरणात् मनवः मोक्षं प्राप्तुं शक्नोति।

**कर्ममार्गः**

शास्त्रलेखकानां मतं यत् स्वस्य सामाजिकं धार्मिकं च कर्म निष्ठया कृत्वा मानवः मोक्षं प्राप्तुम् अर्हति। अत एव कर्ममार्गेण परमपथं प्राप्नोति मानवः। आश्रमाणाम् आचरणं निर्दिष्टकर्मकरणेन च मोक्षः प्राप्यते। मनुमते देवऋषिपित्राख्यानाम् ऋणानां प्रतिकृत्या मोक्षः प्राप्यते। एतेभ्यः ऋणेभ्यः मोचनं विना मोक्षः न सम्भूयते। वेदज्ञानप्राप्तिः, धर्मानुसारं पुत्रजननं, यज्ञक्रिया इत्येतत्सर्वं मोक्षद्वारमेवेति वक्तुं शक्यते।

पुराणानुसारं सर्वेषाम् आश्रमकार्याणां सम्पादनेन मोक्षः सिद्ध्यति। वायुपुराणे अन्तिमाश्रमस्य अनुयायिनां यदा शुभाशुभकर्मत्यागं सम्भवति तदा स्थूलशरीरं त्यक्त्वा सः जन्म-मृत्यु-पुनर्जन्म-विहीनाः भवति इत्युक्तम्।

**ज्ञानमार्गः**

ध्यानशीलो जनः ज्ञानविचारेण च अव्यक्तनिराकारात्मनि श्रद्धां संस्थाप्य ब्रह्मणा सह एकीभवितुं प्रयतते। अयमेव ज्ञानिनां मार्गः। सज्ज्ञानं तु सत्कर्मप्रेरणादायकं भवति। सत्कर्मणा तु आचारकर्मनिवृत्तये योग्यता प्राप्यते। अत एव ज्ञानं तु मानवानां कर्तव्याकर्तव्यप्रबोधकमिति अभिप्रायः।

**भक्तिमार्गः**

श्रीमद्भागवतपुराणे, श्रीमद्भगवद्गीतायां शास्त्रान्तरेषु च मोक्षप्राप्त्यर्थं भक्तिमार्गः

प्रशस्तः। भक्तिः कर्मज्ञानाभ्यां श्रेष्ठा इति। भक्तिमार्गे मनुष्यः ब्रह्मात्मकं भगवत्स्वरूपं पूजयित्वा लौकिकबन्धनकामादयः परित्यज्य सम्पूर्णं जीवनं भगवत्सेवायै अर्पयति। भक्तिमार्गेण गच्छन्तः भक्ताः सुखदुःखम् उच्चनीचत्वं, शुभाशुभं जन्ममृत्युञ्च विस्मरन्ति। तेनैव जन्मबन्धनात् मोक्तुं शक्यते।

भक्ति-कर्म-ज्ञानमिति त्रयो मार्गाः विद्यन्ते मेक्षप्रप्त्यर्थं। एवं सति तद्विषये अस्य ज्योतिश्शास्त्रस्य का प्रसक्तिः इति चेत् - एते त्रयः मार्गाः मोक्षार्थं परिपूर्णतया अनेन शास्त्रेण अङ्गीकृताः सन्ति। ज्योतिश्शास्त्रे मोक्षकालं, तत्प्राप्तेः उपायं, तस्य शुभाशुभावस्थामपि सम्यक्तया प्रवक्तुं शक्यन्ते। उक्तं हि -

**होरेत्यहोरात्रविकल्पमेके वाञ्छन्ति पूर्वापरवर्णलोपात्।**
**कर्मार्जितं पूर्वभवे सदादि यत्तस्य पक्तिं समभिव्यनक्ति।।**[1]

को नाम मोक्षः? उच्यते जननमरणात्मकात् संसारात् मुक्तिरेव अर्थात् जन्माभावः - मोक्षः। पूर्वार्जितानां शुभाशुभकर्मणां फलमेव जन्महेतुरिति शास्त्रोक्त्यां सत्यां, तेषां शुभाशुभानां ज्ञानेन अस्मात् जनिमृतिसंसारात् मोक्तुं शक्यते। इत्यतः शुभाशुभावबोधकमिदं ज्योतिश्शास्त्रम् अवश्यं मोक्षाय उपयुज्यते इति सिद्ध्यति।

वेदाङ्गान्तर्भुतमिदं ज्योतिश्शास्त्रं यत् वेदस्य चक्षुरुच्यते, तदवश्यं वेदस्य परमतात्पर्यम् अनुसर्तव्यमेव यत्तु जीवात्मपरमात्मैक्यं भवति। स एव मोक्षः इत्यतः शास्त्रस्यास्य अयमेव लक्ष्यः। वेदोक्तप्रवृत्तिमार्गे यानि यान्यनुशासितानि कर्माणि वर्तन्ते तानि सर्वाणि मोक्षवर्त्मानि भवन्त्येव। यतोहि कर्मयोगपरैः तैः तदवलम्बिलनो जनाः चित्तशुद्धिम् अवाप्य सत्वोद्रेगात् कर्तृत्वमाधिक्रम्य तत्व ज्ञानाय योग्याताम् आप्नुवन्ति। तेषां कर्मणां यथाकालं यथायोग्यं करणाय अमुना ज्योतिश्शास्त्रेण शक्यते।

---

[1] बृ.जा. 1-3

कर्ममार्गेस्मिन् शुभाशुभकर्मणां ज्ञानम् अनिवार्यमेव यतोहि अकालकृतानि सत्कर्माण्यपि विपर्याय कल्पन्ते। तज्ज्ञानं शास्त्रेणानेन जायते इत्यतः ज्योतिश्शास्त्रं मोक्षसाधनमेव इति वक्तुं शक्यते।

एवञ्च **कालात्मा दिनकृन्मनस्तुहिनगुः**[1] प्रमाणात्वात् सूर्यचन्दौ क्रमशः आत्ममनसोः कारकौ स्तः। आत्मनि मनस्सयोगः एव आत्मानुभूतिः इति कारणात् तयोः तत्कारकयोः तत्वावबोधनात् अनुभूतिरियं सम्भूयते इत्यत्र न कोपि संशयः।तत्परं इतरेपि पञ्चताराग्रहाः कुजबुधगुरुशुक्रशनयः सत्वरजस्तमोगुणानुसारं मुक्तिमार्गान् दर्श्यन्तीति ज्योतिश्शास्त्रे दृश्यते।

उक्तं च बृहज्जातके यथा -

**गतिरपि रिपुरन्ध्रत्र्यंशपोऽस्तस्थितो वा**
**गुरुरथ रिपुकेन्द्रच्छिद्रगः स्वोच्चसंस्थः।**
**उदयति भवनेऽन्त्ये सोम्यभागे च मोक्षो**
**भवति यदि बलेन प्रोज्झितास्तत्र शेषाः।।**[2]

अस्मिन् श्लोके इदमुच्यते यत् शुभग्रहस्य नवमांशनां अष्टमभावे अथवा मीनलग्ने स्थितिः मोक्षाय कल्पते।

एवमेव शास्त्रेषु उक्तं -

**यदापश्यभङ्गंतनुभवननाथोष्टमपति**
**म्मृतिंधर्म्माधिशोजनुषिचतपः स्थानमथवा।**
**शुभाभ्यामाक्रान्तं नवमभवनं पापरहितं**

---

[1] बृ.जा- 2-1

[2] बृ जा- 25-15

**वरक्षेत्रं प्राप्यव्रजतिमनुजोमोक्षपदवीम्।।**[1]

अष्टमाधिपत्वेन लग्नाधिपः लग्ने दृष्टिः, नवमभावे शुभग्रहौ तथा पापग्रहाणां सन्निध्यं न सन्ति चेत् सः नरः अन्तिमे काले पुण्यक्षेत्रेषु गत्वा सिद्ध्यति।

तथा जातकपारिजते -

**मन्दाहिध्वजसंयुते तु निधनस्थानाधिपेनान्विते**
**रिष्फे दुर्गतिमेति षष्ठपतिना दृष्टेऽथवा मानवः।।**
**जातो याति परं पदं सुरगुरौ लग्ने भृगौ कामगे**
**कन्यास्थे रजनीकरे यदि धनुर्लग्ने च मेषांशके ॥**[2]

लग्ने गुरुः सप्तमे शुक्रः, कन्यायां चन्द्रः अथवा लग्ने धनुराशिः अथवा मेषनवांशे स्थितश्चेत् सः जातकः परमं पदम् अथवा मोक्षं प्राप्नोति।।

इतोऽपि 5,9,10 भावैः कर्ममार्गः एवं 4,5,9 इत्येतैः भक्तिमार्गः तथा 2,5,9 इति भावैः ज्ञानमार्गः निश्चीयते। एते त्रयो मार्गाः मुक्तिसाधनरूपाः भवन्तीत्यतः इदं ज्योतिश्शास्त्रं मुक्तिमार्गसोपानमेव भवति।

अस्मिन् शास्त्रे लग्नेन शरीरं, पञ्चमभावेन मनः, अष्टमेन जीवः च चिन्त्यते। यस्य कस्यापि एतेषां त्रयाणां सम्बन्धज्ञानं, मोक्षाय द्वारम् उद्घाटयति।

आश्रधर्मेषु अन्तिमं भवति सन्यासाश्रमं यत्र कर्ममार्गपरस्य गार्हस्थ्यस्य कर्मबन्धान् अतिक्रम्य ज्ञानस्य द्वरमुद्घाट्यते। ज्योतिश्शास्त्रानुसारम् अस्य ज्ञानमार्गस्य सन्यासश्रमस्य नियोगः प्रव्रज्यायोगविभागे अन्तर्भवति।

**एकस्थैश्चतुरादिभिर्बलयुतैर्जाताः पृथग्वीर्यगैः**

---

1 ज्यो. क. -

2 जा. पा. 15-82

**शाक्याजीविकभिक्षुवृद्धचरको निर्ग्रन्थवन्याशनाः ।**

**माहेयज्ञगुरुक्षपाकरसितप्राभाकरोनैः क्रमात्**
**प्रव्रज्या बलिभिः समाः परजितैस्तत्स्वामिभिः प्रच्युतिः ॥**[1]

चतुर्णां वा तदधिकानां बलवतां ग्रहाणां संयोगे जातः कश्चनः प्रव्रजनाय कल्पते। ग्रहाणां बलाधिक्यमनुसृत्य प्रव्रज्याभेदाः वर्तन्ते। अत एव मोक्षमार्गाणां निर्णयोपि अनेन ज्योतिश्शास्त्रेण क्रियते इत्यतः शास्त्रमिदं मोक्षमार्गोपयोगि तथा तत्पदसोपानमेव भवतीत्यवगन्तुं शक्यते।

**उपसंहारः**

इदं तु प्रथितं पुरुषार्थेषु मोक्षः सर्वोत्तमस्थानमलङ्करोतीति प्रामाणीक्रियन्ते शास्त्रविशारदैः। अनेन शास्त्रेण ज्ञातुं शक्यते यत् यथा कालं यथा योग्यं समुचितकर्तव्यकरणेन मोक्षप्राप्तिः सिद्ध्यते इति। पूर्वजन्मस्य शुभाशुभकर्माणामाधारेण अग्रिमजन्मप्राप्तिरिति शास्त्राणां द्दष्टिः। तेषां यथासत्यज्ञानेन अस्मात् इहलोकसंसारात् मोक्षः जायते। मानवस्य जन्मादारभ्य मृत्युपर्यन्तं जायमानाः अवस्थाः ज्योतिश्शास्त्रप्रामाणैः प्रवक्तुं शक्यते। अतः एव शुभाशुभावबोधकमिदं ज्योतिश्शास्त्रम् मोक्षाय अपि अवतिष्ठतीति मन्यन्ते। चित्तसंशुद्धये ज्ञानम्, तेन ज्ञानेन सद्कर्माचरणं च ज्योतिश्शास्त्रेण शक्यते। कर्ममार्गे शुभाशुभकर्म, कर्तव्याकर्तव्यबोधः च अनिवार्यमेव इत्यतः तज्ज्ञानं शास्त्रज्ञानेन जायते इत्यतः अपि ज्योतिश्शास्त्रं मोक्षसाधनमेव इति वक्तुं शक्यते।

**साहायकग्रन्थसूचि**

[1] बृ. ज. 15-1

1. बृहज्जातकम् – वाराहमिहिराचार्यः, भारतीय विद्या प्रकाशन, वाराणसी, 2011
2. बृहज्जातकम् – वाराहमिहिराचार्यः, चौखम्बा प्रकाशन, वारणासी
3. ज्योतिषरकल्पद्रुमम् – एं नीलकणठपिल्ल, चन्द्र प्रस्, तिरुवन्तपुरम्
4. जातकपारिजतः – वैद्यनाथः – रंजन पब्लिकेशन्स, नई दिल्ली

**Appukrishna V**
Devakikrishna House
Adukkathparamba
Uppilkkai post
Kasargod, Kerala
Pin-671314
Email id – appukrishnav@gmail.com
Mob – 8714463435



# ईमीमांसाशास्त्रोक्तरीत्या शब्दस्वरूपविमर्शः

**डा. टि.एस्.आर्. नारायणन्**

जैमिनिना रचिते मीमांसाशास्त्रे धर्मः व्यचार्यत । तत्र परमं प्रमाणं भवति शब्दः। अतः तत्स्वरूपं विचिचारयिष्यते आदौ - शब्दस्वरूपविषयकविचारे शब्दनित्यत्ववादिनां वैयाकरणानामयमाशयः प्रदर्शितः सायणमाधवाचार्यप्रणीत न्यायमालायां - वर्णसमूहश्रवणानन्तरं इदमेकं पदमिति प्रत्ययो मानसप्रत्यक्षेणोदेति। तस्य च प्रत्ययस्य वर्णातिरिक्तः कश्चित् स्फोटनामकः पदार्थो विषयः। स च नित्यः, स एव शब्दः न तु वर्णा इति[1]।

अत्र न्यायदर्शनस्यायमाशयः - वर्णेष्वेव एकार्थावच्छेदोपाधिना पदैक्यबुद्धेरुपपत्तौ वर्णातिरिक्तस्फोटकल्पना निरर्थिका तस्मात् वर्णानामेव शब्दत्वम्। श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वे सति गुणत्वं शब्दस्य लक्षणम् इति तर्कसङ्ग्रहे उक्तम्[2]। शब्दस्सर्वोऽप्यनित्यः, अव्याप्यवृत्तिश्च। स द्विविधः। ध्वनिवर्णभेदात्। तारतारतरत्वादि धर्मवान् अभिघातादिजन्मा अस्फुटशब्दः मृदङ्गादिजन्मा ध्वनिरूपः। कण्ठसंयोगादिजन्यः स्फुटः कखादिरूपः वर्णः। आकाशे समवायेन उत्पन्नस्य शब्दस्य कर्णात्मकाकाशे धारावाहिकोत्पत्या समुत्पन्नस्य प्रत्यक्षं भवतीति, सजातीयशब्दोत्पत्तिस्तु द्विधा भवति वीचीतरङ्गवत् कदम्बपुष्पमञ्जरिवच्च निमित्तपवनेन भवति इति च। स च शब्दः उत्पन्नो ककारः, विनष्टः ककार इति प्रतीतिप्रमाणात् अनित्य इति शब्दः गुण अनित्यः वर्णात्मक श्चेति।

---

[1] जैमिनीयन्यायमाला १.१.६

[2] तर्कसङ्ग्रहः पृ.सं ११३

परंतु मीमांसादर्शने शब्दो वर्णात्मकः अतिरिक्तं द्रव्यम्, वर्णा नित्या: व्यापकाः ध्वनिव्यङ्ग्या इति स्वीक्रियते। वेदापौरुषेयत्ववादिनां शब्दार्थयोर्नित्यसम्बन्धवादिनाञ्च तेषां मीमांसकानामाशयः शब्दनित्यत्वाधिकरणरीत्या प्रदर्श्यते - शब्दव्यञ्जकोच्चारणस्य परप्रत्ययनार्थतया, तस्य शब्दस्य अनित्यत्वे अर्थप्रतिपत्तिं यावत् अनवस्थानात् परस्यार्थप्रतिपत्तिरेव न स्यादिति शब्दो नित्यः इति। तदुक्तं जैमिनिना - नित्यस्तु स्याद्दर्शनस्य परार्थत्वात्[1] इति। एतदुत्तरसूत्रं भवति "सर्वत्र यौगपद्यात्[2]" इति। तदर्थः - गोशब्दे उच्चारिते सति सर्वगोविषयकः प्रत्ययः युगपत् जायते। ततश्च गोशब्दः आकृतिवाचक इत्यवगम्यते। अन्यथा व्यक्तिवाचकत्वे तद्व्यक्तिमात्रप्रत्ययः स्यात्। भवतु, कथमेतावता शब्दनित्यत्वं सिध्यतीति चेत्- श्रूयताम्। एकस्मिन् गोपिण्डे पार्थिवत्वद्रव्यत्वगोत्वादीनां बह्वीनामाकृतीनां सद्भावात् प्रयोगबाहुल्येन विना गोशब्दः विभक्तां गोत्वरूपामाकृतिमन्वयव्यतिरेकाभ्यां नावगमयेत। नित्ये तु शब्देऽभ्युपगम्यमाने तस्य बहुकृत्वः उच्चारणश्रवणयोः सम्भवात् अन्वयव्यतिरेकाभ्यां तत्तदाकृति-विशेषावगमकत्वं सम्भवतीति। यथा घटपटादेः इदं नाशकमित्युपलम्यते तथा शब्दस्य नाशकमिदमिति न कस्याप्यनुभवः। एवं च विनाशहेतोरभावात् शब्द नित्यः। तदुक्तं – अनपेक्षत्वात्[3] इति। वायवीयत्वसम्बन्धस्य साक्षात्काराभावात् शब्दः न वायुकरणक इति शब्दो नित्यः। ध्वसंप्रागभावाप्रतियोगित्वं नित्यत्वम्।

---

[1] मीमांसासूत्रम् १.१.१८

[2] मीमांसासूत्रम् १.१.१९

[3] मीमांसासूत्रम् १.१.२१

अपि च "सङ्ख्याभावात्[1]" इति सूत्रेणापि नित्यत्वं शब्दस्य प्रतिपाद्यते। तस्यायमर्थः - अष्ट गोशब्दानुच्चारयतीति संख्याप्रतीतेरभावात् अपि नित्यः शब्दः। अष्टकृत्वः गोशब्दमुच्चारयतीत्येव प्रतीतेः। अत्र अष्टकृत्व इत्येवं कृत्वसुच्प्रयोगात् तस्य च क्रियाभ्यावृत्तिगणने विहितत्वात् पूर्वोच्चारितशब्दस्यैव पुनरुच्चारणमावर्तते। नहि इयमुच्चारणावृत्तिः शब्दान्तरत्वे भवितुमर्हति। शब्दभेदे ह्यङ्गीक्रियमाणे अष्टौ गोशब्दाः इत्येव प्रयोगः स्यात्। न च तथा दृश्यत इति भावः।

शब्दस्य नित्यत्वे देशभेदात् विभिन्नप्रतीतिः कथं स्यात् इति प्रश्नः पूर्वपक्षिणा कृतः "सत्त्वान्तरे च यौगपद्यात्" इति सूत्रेण। अस्यायमाशयः – सत्त्वान्तरे प्राण्यन्तरे यौगपद्यात् उपलम्भस्येति शेषः। नानादेशस्थैर्वक्तृभिरुच्चारिताः युगपन्नानादेशेषूपलभ्यन्ते। न चैतन्नित्यस्यैकस्य संभवति। न च नित्यत्वेऽप्यनेकत्वात् इदमुपपद्यते, न हि नित्यमेकमेवेति नियम इति वाच्यम्। प्रत्यभिज्ञा हि नित्यत्वे मानम्। सा च नित्यत्ववत् एकत्वमपि साधयतीति एकस्य नानादेशेषूपलब्धिर्विरुद्धा। कार्याणां तु बहूनां नानादेशेषु क्रियमाणानामुपपद्यतेऽनेकदेशसम्बन्धः तस्मादप्यनित्यः शब्दः, इति चेत् न. उच्यते जैमिनिना "आदित्यवद्यौगपद्यम्[2]" इति। यदुक्तमेकस्य नित्यस्य युगपन्नानादेशेषूपलम्भनमनुपपन्नम्। अतो युगपन्नानादेशेषूपलम्भादनेकत्वमनित्यत्वं च शब्दस्य अङ्गीकरणीयमिति। तत्र हेतोरनैकान्तिकत्वप्रदर्शनार्थमिदं सूत्रम्। अनेकत्वाभाववति आदित्ये नानादेशोपलम्भरूपहेतुसत्त्वाद् व्यभिचारः। नन्वेक एवादित्य इति कथमवगम्यते। युगपदनेकदेशोपलम्भात् भिन्नाः एव भवत्त्वादित्या इति चेत्- उच्यते। यदि भिन्ना आदित्या भवेयुः तदा पूर्वाह्णे पुरस्तात् प्राङ्मुखतया आदित्यमनेकेषु

---

[1] मीमांसासूत्रम् १.१.२०

[2] मीमांसासूत्रम् १.१.१५

देवदत्तादिषु पश्यत्सु अनेके आदित्या उपलभ्येरन्, उपलब्धिसाधनानां सद्भावात्। न तु तथा केऽप्युपलभन्त इति योग्यानुपलब्धिबाधितत्वात् न सूर्यनानात्वमभ्युपगन्तुं युक्तम्। एवं चैकदेशस्थस्यैवादित्यस्य नानादेशेषूपलम्भः भ्रान्तिः। तस्य भ्रान्तित्वे प्रमाणं तु अतिदूरवर्तिनोऽस्यादित्यस्य यथावद्देशमजानन्तः स्वस्वसन्निधिमध्यस्यन्तः देशभेदं मन्यन्ते। अतो दूरत्वदोषेण जायमानत्वादस्याः प्रतीतेः भ्रान्तित्वमिति।एवमेव शब्देऽपि नानादेशोपलम्भः दोषविशेषेण जायमानः भ्रम एव। तथा हि यदि श्रोत्रं भिन्नभिन्नान् वक्तृवक्त्रप्रदेशानागत्य शब्दं गृह्णीयात् ततोऽनेकदेशता ज्ञायेतापि। न तु तत्तथा उद्देशानागच्छति। स्वदेशस्थितमेव सत् श्रोत्रं यदा शब्दं गृह्णाति तदा तस्य देशस्यैकत्वात् एकस्मिन्नेव देशे परमार्थतः शब्दः श्रूयते। तं तु देशमनवधारयन्तः दोषविशेषेण वक्तृवक्त्रप्रदेश एव शब्दं मन्वानाः तेषां देशानां भेदात् शब्दस्यापि भिन्नदेशतां भ्रान्त्या मन्यन्ते। श्रोत्रानागमने कारणं तु प्रत्यक्षा हि कर्णशष्कुली तद्देशा गृह्यत इति भाष्ये उक्तम्।

ननु वक्तृवक्त्रप्रदेशं प्रति श्रोत्रस्यानागमनं प्रति यत् कारणमुक्तं प्रत्यक्षा हि शष्कुली तद्देशस्था गृह्यत इति। तदयुक्तम्। न हि श्रोत्रं तत्स्वरूपम्, येन गमनाभावो निश्चीयेत। किं तु तदवच्छिन्नो नभोभाग एवेति। तस्य गमनाभावः अप्रत्यक्षत्वात् कथं निश्चीयेत इति चेत्- न। यतः कर्णशष्कुल्यवच्छिन्ननभोभागस्य श्रोत्रत्वेऽपि तादृशश्रोत्रेन्द्रियस्य अधिष्ठानभूतकर्णशष्कुलीबहिर्भागे कार्यकारणशक्तेः यत्र देशे शब्दो गृह्यते श्रोत्रेन्द्रियेण तत्राधिष्ठानभूतकर्णशष्कुल्यः अपि गृह्येरन् गमनपक्षे, न तु तथा गृह्यन्त इति। ननु अभिव्यञ्जकानां संयोगविभागानां श्रोत्रदेशेऽभावात् कथं तत्र शब्दग्रहणमिति चेत्- उच्यते। न तावत् संयोगविभागाः ताल्वादिदेशस्था एव। किं तु वायवीयाः सन्तः कर्णशष्कुलीदेशपर्यन्तं प्रादुर्भवन्ति। तेषां चाप्रत्यक्षवायुसम्बन्धित्वात्

उपलब्धिः परं न भवति। परं तु वर्तन्त एव ते श्रोत्रदेशे इति नानुपपन्नं तत्र शब्दग्रहणम्। यतः पूर्वोक्तरीत्या श्रोत्रदेश एवैकस्मिन् शब्दो गृह्यते न तु अनेकेषु वक्तृवक्त्रप्रदेशेषु तत एव व्यामोहो यन्नानादेशेषु शब्द इति। अपि च शब्द आकाशदेशः। एकं च पुनराकाशम्। अतोऽपि न नानादेशेषु।

ननु यत्र श्रोत्रैकत्वं वक्तृबहुत्वं च तत्र पूर्वोक्तरीत्या नानादेशेषूपलब्धिर्भवतु भ्रान्तिः। यत्र तु श्रोतृबहुत्वं तत्र परमार्थत एव देशभेदात् शब्दस्वरूपमपि भिद्येत। आकाशदेशत्वेऽपि च शब्दस्य आकाशप्रदेशानां भेदात् नानुपपन्ना नानादेशता। अतश्च युगपन्नानादेशोपलम्भात् शब्दस्य भेदः, भेदाच्च कार्यता च सिध्यति इति चेन्न। स एवायं गकार इत्येवं प्रत्यक्षप्रत्यभिज्ञया ऐकरूप्यावगमान्न देशभेदेन लिङ्गेन शब्दभेदानुमानं संभवति, प्रत्यक्षविरोधात्। सूत्रार्थस्तु - आदित्यस्यैकस्य यथा युगपद्दर्शनं तथा शब्दस्यापि इति।

"प्रकृतिविकृत्योश्च[1]" इत्यस्मिन्सूत्रे अनित्यत्वं शब्देषु प्रकृतिविकृति-भाव्दर्शनादाक्षिप्यते – दध्यत्रेत्यत्र प्रकृतेः इकारस्य विकृतेः यकारस्य च दर्शनात् अवगमात् इकारं प्रकृतिः यकारः विकृतिः इत्युपदेशतोऽवगमात्। यद्विक्रियते तदनित्यम्। यकारस्येकारसादृश्यमुपलभ्यते। तेनापि प्रकृतिविकृतिभावः तयोः अवगम्यते। तस्मादप्यनित्यः शब्दः इति चेत् - तत्र समाधीयते – "वर्णान्तरमविकारः[2]" इति। इकारात् यकारः वर्णान्तरं, न तु इकारस्य विकारः यकारः। न हि यकारं प्रयुञ्जानाः इकारमुपाददते, यथा कटं चिकीर्षन्तो वीरणानि। न च सादृश्यमात्रं दृष्ट्वा प्रकृतिः विकृतिर्वा उच्यते। दधिपिटककुन्दपिटकयोः सत्यपि

---

[1] मीमांसासूत्रम् १.१.१०

[2] मीमांसासूत्रम् १.१.१६

धावल्यादिना सादृश्ये प्रकृतिविकारभावानवगमात्।

उच्चारयितृबाहुल्येन अस्य शब्दस्य वृद्धिः महत्त्वं दृश्यते। सः यद्यभिव्यज्यते बहुभिरल्पैश्चोच्चार्यमाणः तावानेवोपलभ्येत। अतो मन्यामहे नूनमस्य एकैकेन कश्चित् अवयवः क्रियते, यत्प्रचयादयं महानुपलभ्यते। तस्मादनित्यः इति। तदुक्तं – “वृद्धिश्च कर्तृभूम्नास्य[1]” इति। तत्र सिद्धान्ती वदति – “नादवृद्धिपरा” इति। यच्चैतत् बहुभिः भेरीमाधमद्भिः शब्दमुच्चारयद्भिः महान् शब्द उपलभ्यते, तेन प्रतिपुरुष शब्दावयवप्रचय इति गम्यते। तेन च सावयवत्वात् शब्दस्यानित्यत्वमिति। तन्न। निरवयवो हि शब्दः अवयवभेदानवगमात्। निरवयवत्वाच्च महत्त्वानुपपत्तिः। अतो न वर्धते शब्दो मृदुः। एकेन बहुभिश्चोच्चार्यमाणे तान्येवाक्षराणि कर्णशष्कुलीमण्डलस्य नेमिं व्याप्नुवद्भिः संयोगविभागैः नैरन्तर्येणानेकशो ग्रहणात् महानिवावयववानिव उपलभ्यन्ते। संयोगविभागा नैरन्तर्येण क्रियमाणाः शब्दम् अभिव्यञ्जयन्तो नादशब्दवाच्याः। तेन नादस्यैषा वृद्धिः न शब्दस्येति नित्यः एव शब्दः इति सिद्धम्।

मीमांसादर्शने गकारादिवर्णः न प्रत्येकं व्यक्तिभेदभिन्नः। भेदधीस्तु व्यञ्जकध्वनिभेदादेव। वर्णा नित्याः व्यक्तित अभिन्नाश्च पदं गकाराद्येव स एव शब्दः नान्यत् व्यतिरिक्तमस्ति। स च शब्दः परिपूर्णपदान्तरमाकाङ्क्षति ततो वाक्यं भवति। पदं सामान्यवृत्ति, वाक्यं विशेष्यवृत्ति। नित्यानि पदानि संहत्य अर्थममिदधति। ततश्च पदे वर्णानां वाक्ये च पदानां एकार्थप्रतिपादनकार्यकारित्वम्। तथा च वर्णानां नित्यत्वात्

---

[1] मीमांसासूत्रम् १.१.११

एकार्थावच्छेदकस्य पदस्यापि वर्णस्य कारणसापेक्षत्वं नास्तीति नित्यत्वमेवेति मीमांसकाशयः। वर्णानां तत्समुदायात्मकपदानां च द्रव्यत्वं मीमांसासिद्धान्तः। शब्दः केवलं गुणवचनस्सन् द्रव्यमभिधातुं न शक्नोति। बाह्येन्द्रियग्राह्यतया शब्दस्य गुणत्ववादः अनुपपन्नः। तथासति वायौ रूपत्वादिसामान्ये च व्यभिचारापत्तिः। प्रत्यक्षद्रव्यगुणत्वाभावविशिष्टप्रत्यक्षेण गुणत्वाभावानुमानाच्च। तत्र कर्मवेगवत्वेन च द्रव्यत्वानुमानसम्भवश्च। शब्दो द्रव्यं साक्षादक्षसम्बन्धग्राह्यत्वात् घटवत् इत्यनुमानञ्च तस्य द्रव्यत्वे प्रमाणम्। शब्दो नित्यः ध्वनिभिन्नत्वे सति श्रावणत्वात् शब्दत्ववत् इत्मनुमानेन तस्य नित्यत्वं व्यापकत्वञ्च सिध्यति। वाक्यञ्च पदसमभिव्याहार एव। पदद्वयान्वयः वाक्यम्, कर्तृत्वाद्यन्यतमशक्तिज्ञानाजन्यकर्तृत्वाद्यन्यतमशाब्दबोध-प्रयोजकपदसमभिव्याहारो वाक्यमिति, स्वेन स्वेन पदसमूहेन परिपूर्णं वाक्यमिति मीमांसाग्रन्थेषु दृश्यते। परं प्राभाकरमीमांसादर्शने शब्दः आकाशगुणः न द्रव्यमिति स्वीक्रियते। भाट्टसिद्धान्तानुसारेण तु शब्दः एवमुक्तः मानमेयोदये –

श्रोत्रमात्रेद्न्रियग्राह्यः शब्दः शब्दत्वजातिमान्।
द्रव्यं सर्वगतो नित्यः कुमारिलमते मतः [1]॥ इति ॥

## परिशीलितग्रन्थसूची

१. मानमेयोदयः नारायणद्वयीप्रणीतः – Saddarsan Prakasan Pratisthan, Varanasi, 1978

२. जैमिनीयन्यायमाला सायणमाधवाचार्यविरचिता - Anandashrama

[1] मानमेयोदयः, शब्दनिरूपणम्

Press, Poona, 1892

३. श्लोकवार्तिकम् - Ratna Publications, Varanasi, 2007
४. अध्वरमीमांसाकुतूहलवृत्तिः – S.L.B.S Sanskrit University, New Delhi, 1968
५. मीमांसाकोशः - Sri Sadguru Publicationas, 1996
६. तर्कसङ्ग्रहदीपिकाप्रकाशिका – Madras University, Chennai, 1980

**डा. टि.एस्.आर्. नारायणन्**
मीमांसाविभागाध्यक्षाः
राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः
sankhapuramnarayanan@gmail.com



# अलङ्कारशास्त्रस्य शास्त्रत्वनिरूपणम्

**डा. अनुपमा यॉलिः**

**भूमिका -**

शास्ति इति शिष्यते अनेन वा इति शास्त्रम्। 'शाँसु' अनुशिष्टौ धातोः (अदादिगणः) अस्य व्युत्पत्तिः। प्रवृत्तिश्च निवृत्तिश्च पुंसा येनोपदिश्यते तच्छास्त्रमभिधीयते। वेदविहितवेदसंरक्षणादिलक्षणैः यद् विद्यते तत् शास्त्रत्वव्यवहृतिः। शास्त्राणां सङ्ख्याविषये मतभेदाः बहुधा वर्तन्ते। शास्त्राणि प्रसिद्धव्यवहारगोचराणि षडेव इति केचित्। तानि च व्याकरणपूर्वमीमांसोत्तरमीमांसासाङ्ख्यवैशेषिकन्यायनामकानि। एषामेव दर्शनपदेन व्यवहारः।

शास्त्रं चतुर्दशविधम् इति केचित् –

"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश।।"

अपरे केचन "आयुर्वेद-धनुर्वेद-गान्धर्ववेदशिल्पवेदनामकानामुपवेदानां चतुर्णां चतुर्दशभिर्मेलने अष्टादशविद्या।" इति। वार्तादण्डनीत्योर्मिश्रणेन ताः विंशतिरिति परे। अलङ्कारशास्त्रस्यापि सङ्कलने एकविंशतिर्विद्या इति काव्यालङ्कारतत्त्वविदः। किन्तु सर्वैः इदं न अङ्गीक्रियते। काव्यशास्त्रम् अलङ्कारशास्त्रं वा शास्त्रत्वेन नान्तर्भवतीति बहूनां विद्वज्जनानाम् अभिप्रायः। या कापि वा भाषा भवतु, लोके काव्यानि प्रसिद्धान्येव। काव्यमित्थं भवेत्, तस्य स्वरूपं विषयगतलक्षणानि वा इत्थं स्युः इति यत् प्रतिपादयति तदेव काव्यशास्त्रम्। तर्हि किमर्थम् अलङ्कारशास्त्रस्य शास्त्रत्वेन न परिगणनमिति इति प्रश्नः स्यात्। तदेव निरूपयितुम् अस्मिन् शोधलेखे यत्नः विहितः।

**अलङ्कारो नाम किम् ?**

लौकिकव्यवहारे अलङ्कारो नाम आभूषणम्। 'अलङ्करोति इति अलङ्कारः' अथवा 'अलङ्क्रियते अनेनेति वा अलङ्कारः'। उभयथापि अलङ्करणसाधनम् अलङ्कार इति स्पष्टः। 'अलम्' पूर्वक 'डुकृञ्' धातोः भावे 'घञ्' प्रत्यये 'अलङ्कार'शब्दस्य निष्पत्तिर्भवति। साहित्यसन्दर्भे तु 'शब्दार्थयोः सौन्दर्याधायकं तत्त्वम् अलङ्कारः' इति प्रसिद्धिः। काव्यसौन्दर्यम् अलङ्कारः इत्यपि व्यवहारः। यद्यपि उपमारूपकोत्प्रेक्षाद्यलङ्काराणां प्रयोगे अस्य सङ्कीर्णार्थः भवति, विस्तृतार्थे तु रसालङ्काराद्यनेकविषयसम्भूतम् इदं शास्त्रम् इति कथने नास्ति अतिशयोक्तिः। 'सौन्दर्यम् अलङ्कारः' इति वामनः, 'काव्यं ग्राह्यमलङ्कारात्' इति। अलङ्काराः कटककुण्डलादयो यथा स्त्रीपुरुषयोः शरीरसौन्दर्यम् अभिवर्धयन्ति तथा अलङ्काराः काव्यशरीरस्य सौन्दर्यम् अभिवर्धयन्ति इति भामहः। 'न कान्तमपि निर्भूषं विभाति वनिताननम्।' तथा च - 'अलङ्काररहिता विधवैव सरस्वती' (अग्निपुराणम्)। 'हारादिवदलङ्काराः सन्निवेशो मनोहरः' (चन्द्रालोकः 5.2)। 'काव्यं ग्राह्यम् अलङ्कारात्', 'सौन्दर्यमलङ्कारः' (काव्यालङ्कारसूत्रम् 1-2) इति च।) 'काव्यशोभायाः कर्तारो धर्मा गुणाः। तदतिशयहेतवस्त्वलङ्काराः (काव्यादर्श) ।।

'अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती।
असौ न मन्यते कस्माद् अनुष्णमनलं कृती'।। (चन्द्रालोकः)

'काव्यशास्त्रम्', 'सौन्दर्यशास्त्रम्', 'साहित्यशास्त्रम्' इत्यादीनि अस्य शास्त्रस्य नामान्तराणि।

**अलङ्कारशास्त्रस्य शास्त्रत्वनिरूपणम् -** काव्यक्रिया, तल्लक्षणानि नियमाश्च यत् शास्ति तदेव काव्यशास्त्रम्। काव्यकरणविधिं यत् प्रतिपादयति तत् काव्यशास्त्रम्। अलङ्कारशास्त्रस्य शास्त्रत्वमस्ति न वेति प्रश्नः। आलङ्कारिकाः तु अस्य शास्त्रत्वं

समर्थयन्त्येव। यथा राजशेखरः - 'पञ्चमी साहित्यविद्या', 'शब्दार्थयोर्यथावत्सहभावेन विद्या साहित्यविद्या' इत्येवं प्रत्यपादयत्। क्रमेण रुय्यकविश्वनाथादिभिरालङ्कारिकैः विरचितैः काव्यमीमांसा-साहित्यदर्पणादिभिर्ग्रन्थैः साहित्यपदं काव्यपरत्वेन अलङ्कारशास्त्रपरत्वेन च लोके प्रसिद्धिं लेभे। 'काव्यं ग्राह्यमलङ्कारात्' इति न्याय्यात् यद्यपि रसालङ्काराद्यनेकविषयविशिष्टमिदं शास्त्रं तथापि छत्रिन्यायेन अलङ्कारशास्त्रमुच्यते इति प्रत्यपादयत् प्रतापरुद्रीयव्याख्याता कुमारस्वामी।

**अत्र हेतुः** - विषयसत्वात्, प्रयोजनसत्वात्, पुरुषार्थपर्यवसानात्, कर्तव्यताबोधकवैदिकप्रमाणसत्वाच्च तस्य शास्त्रत्वमिति।

1. **विषयः** - काव्यकरणविधिः यत् प्रतिपादयति तदेव अस्य विषयः। रसाद्यलाङ्काराद्यनेकविषयसम्पन्नमिदम्।

2. **प्रयोजनम्** - सर्वस्यापि उपदेशस्य प्रवृत्तिनिवृत्तिरूपमेव हि प्रधानं प्रयोजनम्। अत्र प्रयोजनं नाम तत्तत्काव्यमुखेन सम्पाद्यं व्यष्टिहितं वा समष्टिहितं वा भवति। काव्यस्य प्रयोजनं तु बहुधा चर्चितं बुधजनैः। काव्यं हि आनन्दानुभूतिसाधनं, स्वान्तः सुखाय, सद्यः परनिर्वृतये, आह्लादकारकाय च भवेत्। यथोक्तं मम्मटेन-

"काव्यं यशसे अर्थकृते व्यवहारविदे शिवेतरक्षतये
सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे।।" (काव्यप्रकाशः – 1) इति।

3. **पुरुषार्थपर्यवसानम्** - भारतीयानां सर्वोत्कृष्टं प्रमाणमस्ति वेदः। वेदस्य मूलं पुरुषार्थचतुष्टयम्। यत्पुरुषार्थान् बोधयति उत साधयतीति तत् काव्यशास्त्रम्। यथोक्तं भामहेन -

"धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।
करोति प्रीतिं कीर्तिञ्च साधुकाव्यनिषेवणम्।।" इति।

अपि च कुन्तकेन अपि इत्थं प्रोक्तम् -

"धर्मादिसाधनोपायः सुकुमारक्रमोदितः।
काव्यबन्धोऽभिजातानां तद्वदाह्लादकारकः।।" इति।

आचार्यविश्वनाथोऽपि काव्यादेव चतुर्वर्गफलावाप्तिः इति उररीचकार। तदुक्तिर्यथा -

"चतुर्वर्गफलावाप्तिः सुखादल्पधियामपि।
काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते।।" इति।

इत्थम् आलङ्कारिकशेखराणाम् अभिप्रायमनुसृत्य चतुर्विधपुरुषार्थसिषाधयिषूणां साहित्योपासकानां सतां मार्गं सुगमीकरोति काव्यवर्त्म इत्यवगम्यते।

**4. कर्तव्यताबोधकवैदिकप्रमाणम् -** उपदेशस्त्रिविधः - प्रभुसम्मितः, मित्रसम्मितः कान्तासम्मितश्च। कान्तासम्मितं तु काव्यम्। कान्ता तु सरसतामापाद्य 'रामादिवत्प्रवर्तितव्यं न तु रावणादिवत्' इति कर्तव्याकर्तव्यम् उपदिशति।

इत्थं काव्यशास्त्रस्य शास्त्रत्वप्रमाणम्।

अपरञ्च -

**अनुबन्धचतुष्टयम् -** सर्वस्य अपि शास्त्रग्रन्थस्य आरम्भः भवति अनुबन्धचतुष्टयेन। एतेषाम् अवगमनादेव शास्त्रं वा कस्यचित् वा ग्रन्थपठने प्रचोदयति। अतः अयम् अनुबन्धः इति कथ्यते। एवं चतुर्णाम् अंशानां विवरणेन एव ग्रन्थस्य आरम्भः सर्वैः अनुस्त्रियमाणः सम्प्रदायो वर्तते। अलङ्कारशास्त्रत्वनिरूपणे तु 'अनुबन्धचतुष्टयम्' इत्यस्य प्रमाणं नितराम् अपेक्षितम्। अस्मिन् चत्वारः अंशाः विद्यन्ते -

1. अधिकारी – अत्र सन्दर्भे सहृदयः अधिकारी भवति।

2. विषयः - निर्दिष्टे शास्त्रग्रन्थे प्रतिपाद्यमानः अंशः विषयः। अत्र सन्दर्भे काव्यशास्त्रविषयकचर्चा एव विषयः भवति।

3. सम्बन्धः - ग्रन्थस्य विषयस्य च बोध्य-बोधकभावः (प्रतिपाद्यप्रतिपादकः) एव

सम्बन्धः।

4. प्रयोजनम् - निर्दिष्टस्य ग्रन्थस्य अध्ययनेन प्राप्यमाणः लाभः एव प्रयोजनम् ।

**साहित्यशास्त्रावतारः - अलङ्कारशास्त्रे अष्टौ प्रस्थानानि -**

काव्यशास्त्रे लक्ष्यभूताः विषयाः बहुधा चकासत्येव। तत्र अष्टौ प्रस्थानानि इति प्रसिद्धानि। तानि यथा-

**1. रसवादः -** भरतमुनिः अस्य रससिद्धान्तस्य प्रवर्तकः। 'नाट्यशास्त्रम्' इति ग्रन्थस्य षष्ठे अध्याये विस्तारेण अस्य चर्चा कृता। अमुं सिद्धान्तम् अनुसृत्य अनेकैः काव्यशास्त्रज्ञैः 'काव्यस्य आत्मा रसः' इति अङ्गीक्रियते। तत्रापि साहित्यदर्पणकारः विश्वनाथः अग्रगण्यः।

**2. अलङ्कारवादः -** उपमाद्यलङ्काराणां सन्दर्भे तु अयं सङ्कीर्णार्थः भवति। विस्तृतार्थे तु रसालङ्काराद्यनेकविषयमिदं शास्त्रम्। अलङ्काराः काव्यस्य आत्मा इति यद्यपि न केनापि अङ्गीक्रियते तथापि काव्यजगति तेषां प्राधान्यं नितरामस्त्येव। अस्य स्रोतः तु अग्निपुराणं तथा भरतमुनेः नाट्यशास्त्रम्। भामहः अस्य प्रवर्तकः। 'काव्यालङ्कारः' नामके ग्रन्थे विस्तरेण अस्य चर्चा कृता। वाग्भटादयः आचार्याः अनुवर्तिनश्च।

**3. गुणवादः -** आचार्यः दण्डी अस्य प्रवर्तकः। 'काव्यादर्शः' इति ग्रन्थे गुणान् अधिकृत्य प्रास्तौत् दण्डी। काव्यबन्धस्य (पदरचनायाः) धर्मः गुणः भवति। गुणाः काव्यशरीरस्य अन्तर्बहिः सौन्दर्याभिवर्धकाः प्राणाश्च इति प्रत्यपादयत्। यथा शौर्यधैर्यादयो गुणा आत्मधर्माः तथैव माधुर्यादिगुणाः रसधर्माः भवन्ति। रसगुणयोः अविनाभावसम्बन्धः अपि भणितमत्र। दशगणानां चर्चा कृता च अत्र ।

**4. रीतिवादः -** रीतिर्नाम – 'विशिष्टा पदरचना।' काचित् शैली इति। रीतयः काव्यशरीरस्य अन्तर्बहिः सौन्दर्याभिवर्धकाः। विशिष्टा भणितिभङ्गी, पदसङ्घटना वा, कविप्रतिभाजन्या, व्युत्पत्तिलभ्या, अभ्याससिद्धा, गुणाश्रया, रसं भावं वा

अभिव्यञ्जयन्ती रीतिरिति। अस्य स्रोतः भरतमुनेः नाट्यशास्त्रम्। प्रवर्तकः तु वामनाचार्यः। काव्यालङ्कारसूत्रम् इति सम्बद्ध-ग्रन्थे अमुं सिद्धान्तं प्रास्तौत् ।

**5. ध्वनिवादः** - आनन्दवर्धनाचार्यः अस्य प्रवर्तकः। 'ध्वन्यालोकः' इत्यस्मिन् काव्यशास्त्रग्रन्थे विस्तरेण अमुं सिद्धान्तं प्रापञ्चयत्। अभिनवगुप्ताचार्येण 'लोचनम्' इति व्याख्याने अस्य महती प्रस्तुतिः कृता। व्याकरणशास्त्रस्य 'स्फोटवादात्' अयं सिद्धान्तः सङ्गृहीतः ।

ध्वनति यः सः व्यञ्जकः शब्दो ध्वनिः। ध्वनति, ध्वनयति वा यः स व्यङ्ग्यार्थः ध्वनिः। ध्वन्यते इति ध्वनिः। ध्वन्यते अनेन इति ध्वनिः, इत्यनेन व्यञ्जनादिशक्तीनां ग्रहणम्। ध्वन्यतेऽस्मिन्निति ध्वनिः इति ध्वनिशब्दस्य निर्वचनम्। इत्यनेन निर्वचनेन व्यङ्ग्यार्थप्रधानं काव्यमपि सङ्गृह्यते।

एवं ध्वनिशब्देन व्यञ्जकशब्दः, व्यङ्ग्यार्थः, व्यञ्जनाव्यापारः, व्यङ्ग्यप्रधानकाव्यञ्च ग्राह्यम्। शब्दद्वारा मनसि यम् अर्थं स्फुरति, स्फोटति सः ध्वनिः। वाच्यार्थापेक्षया व्यङ्ग्येऽर्थे मुख्ये सति ध्वनिरिति कथ्यते। तथाविधं च काव्यं सर्वोत्कृष्टं मन्यन्ते ।

**6. वक्रोक्तिवादः** – वक्रोक्तिः नाम वाक्रा उक्तिः। तन्नाम उक्त्यां वक्रता इति। कुन्तकाचार्येण 'वक्रोक्तिजीवितम्' इति तस्य स्वकीये ग्रन्थे वक्रोक्तिः काव्यजीवितम् इति प्रतिपाद्य वक्रोक्तेः प्राधान्यं समर्थायामास। अत्र कुन्तकेन काव्यस्य आत्मा इति अनुक्त्वा इयञ्च उक्तिः साक्षात् काव्यस्य जीवितमेव इति बोधयामास। वक्रोक्तिरिति यद्यपि अलङ्कारः वर्तते तस्य अलङ्कारमात्रप्रयोगः सङ्कीर्णार्थे एव। विस्तृतार्थे तु इयं उक्तिः तु कवेः प्रतिभा ।

**7. अनुमितिवादः** - राजानकमहिमभट्टस्य व्यक्तिविवेकः इति ग्रन्थः काव्यशास्त्रजगति गरिमास्थानं प्रापयत्। व्यक्तेः नाम व्यञ्जनायाः विवेकः अत्यन्तदार्ढ्येन कृतः महिमभट्टेन। सर्वथा अनेन ध्वनिकारेण आनन्दवर्धनाचार्येण ध्वन्यालोके प्रतिपादितः

ध्वनिवादः समूलतः खण्डितः अस्मिन् ग्रन्थे। अनुमानेन एव भावादयः ग्राह्याः इति अनेन अनुमितिवादः प्रतिपादितः।

**8. औचित्यम्   - क्षेमेन्द्रः   - औचित्यविचारचर्चा**

उचितस्य भावः इति औचित्यम्। आचार्येण क्षेमेन्द्रेण औचित्यविचारचर्चा इत्यस्मिन् ग्रन्थे अयं सिद्धान्तः प्रतिपादितः। अत्र क्षेमेन्द्रेण औचित्यं काव्यस्य आत्मा इत्यनुक्त्वा औचित्यमेव काव्यस्य जीवितम् इति परिचर्चते। काव्ये औचित्यं सर्वथा भवितव्यमिति सः समर्थयामास। तद् केन सह औचित्यं नाम काव्ये शब्द-अर्थ-रस-अलङ्कार-नायक-नायिका-खलनायक-सन्दर्भादिभिः सह औचित्यं स्यात्। तन्नाम काव्ये, तस्य सन्दर्भेषु वा पात्रेषु वा एकता, योजनम्, अविरोधः च ।

काव्ये कथावर्णने, कथने, संवादेषु, लेखने च आधारितं भवति। प्रायशः औचित्यम् इति तस्य अनुपस्थितौ ज्ञायते (अनौचित्यम्) न तु उपस्थितौ। अनौचित्यम् नाम रसभङ्गः इति ध्वनिकारः अभिप्रेति ।

**काव्यस्य शास्त्रत्वप्रतिपादने पण्डितराजजगन्नाथस्य योगदानम् -**

'काव्यस्यात्मा इदम्' इति वा 'काव्यस्य जीवितम् इदम्' इति वा यद्यपि पण्डितराजेन न प्रतिपादितं तथापि रसस्य प्राधान्यं वहत् काव्यशास्त्रविषयान् न्यायशास्त्रपरेण प्रापयत्। पूर्वाचार्यैः प्रोक्तकाव्यलक्षण-काव्यकारणादीन् विषयान् पूर्वपक्ष-उत्तरपक्षादिमाध्यमेन, अव्याप्त्यतिव्याप्त्यादिदोषान् खण्डयन् स्वकीयलक्षणानि न्यायशास्त्रपरेण प्रामाणयत् जगन्नाथः। इत्थं काव्यशास्त्रं शास्त्रं नैव इति कथयतां पण्डितानां वाक्स्थम्भनमेव अकारि जगन्नाथेन ।

**अलङ्काराशास्त्रस्य प्रामुख्यम् -**

अग्निपुराणादारभ्य काव्यस्य प्राधान्यं बहुधा कीर्तितं बुधजनैः। 'कलासीमा काव्यम्' इति अग्निपुराणम्,

"न तज्ज्ञानं न तच्छिल्पं न सा विद्या न सा कला।
नासौ योगो न तत्कर्म नाट्येऽस्मिन् यन्न दृश्यते ।।" इति भरतमुनेः नाट्यशास्त्रम्।

तथा च नैकैः आलङ्कारिकैः इत्थं प्रशंसयामास-

"न स शब्दो न तत् वाच्यं न सा विद्या न सा कला।
जायते यन्न काव्याङ्गम्, अहो भारो महान् कवेः ।।" इति।
"साहित्यसङ्गीतकलाविहीनः साक्षात् पशुः पुच्छविषाणहीनः।" इति।

**उपसंहारः -**

लोके काव्यस्य महत् वैशिष्ट्यम् अस्ति। इतरशास्त्राणाम् अपेक्षया लोके काव्यस्य विपुलता, प्रसिद्धता च अस्ति। काव्यं नाम हृदयस्थान्तर्वर्तिभावनानां बाह्यजगतः आन्तरिकजगतः वा सौन्दर्यस्य शब्दद्वारा अभिव्यक्तिः। एवं काव्यं सौन्दर्याभिव्यक्तिः। विभिन्नभावनानाम् अभिव्यक्तिः काव्यम्। विभिन्नकलानाम् आविष्कारः काव्यम्। आचार्यशङ्करभगवत्पादैरपि इत्थम् उदीरितम् - 'वाग्वैखरी शब्दझरी शास्त्रविज्ञानकौशलम्' इति। एतादृशवैशिष्ट्यगतकाव्यस्य काव्यगतविषयानां च बहूनि लक्षणानि सन्ति। तेषां लक्षणानां प्रतिपादनं, निरूपणं, विषयगतचर्चादिकं शास्त्रमेव प्रमाणयति इत्यतः काव्यस्य शास्त्रत्वं नितराम् अपेक्ष्यते एव। अतः अलङ्कारशास्त्रस्य वा उत काव्यशास्त्रस्य वा शास्त्रत्वस्य अस्तित्वे नास्ति लेशामात्रोऽपि संशयः इति वक्तुमिचितम्।

**उपयुक्तग्रन्थसूचिः**

1. काव्यालङ्कारः, भामहः, वारणासी, चौखम्बा संस्कृतसंस्थान, 2002
2. काव्यालङ्कारसूत्रवृत्तिः, आचार्यवामनः, वारणासी, चौखम्बा अमरभारती, 1977
3. काव्यानुशासनम्, हेमचन्द्रः, वारणासी, कृष्णदास अकादमी, 2000

4. काव्यप्रकाशः, मम्मटः, वारणासी, चौखम्बा कृष्णदास अकादमी, 2016

5. नाट्यशास्त्रम्, भरतमुनिः, वारणासी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, 2015

6. वक्रोक्तिजीवितम्, राजानककुन्तकः, वारणासी, विश्वविद्यालयप्रकाशनम्, 2007

7. रसगङ्गाधरः, प्रथमम् आननम्, पण्डितराजजगन्नाथः, कोलकत्ता, दि एशियाटिक् सोसायिटि, पुनर्मुद्रणम्, 2018

8. काव्यालङ्कारसूत्राणि, आचार्यवामनः, वारणासी, चौखाम्बा सुरभारतीप्रकाशनम्, 2013

9. साहित्यदर्पणम्, आचार्यविश्वनाथः, वारणासी, चौखम्बाविद्याभवन, 1957

10. साहित्यसोपानानि, डाँ. दिवाकर्लवेङ्कटावधानि, संस्कृतानुवादकः डाँ. ईमनि वेङ्कटसत्यनारायणमूर्तिः, तिम्मसमुद्रम्, आन्ध्रप्रदेशः, 2004

11. काव्यलभ्यं प्रयोजनम्, डाँ. र्यालि. अनुपमा, Samskrit Refereed Quarterly E Journal - HITAYA (ISSN : 2581-7787) Volume 8, 2021

**Dr. Anupama Ryali**
Associate Professor,
School of Vedic Sciences,
MIT-ADT University,
Pune, Maharashtra.
anupama.ryali@mituniversity.edu.in



# उपरागविचारः

**डा. जयकृष्णन् नम्पूतिरिः एन्. डि.**

**शोधपत्रसारांशः**

भारतीयशास्त्रपरम्परायां ज्योतिश्शास्त्रं मुख्यं स्थानम् आवहति। वेदोक्तकर्मणां कालज्ञानमनेन शास्त्रेणेत्यतः अस्य वेदाङ्गत्वम्। कालविधायकं शास्त्रम् इत्यपि शास्त्रस्यास्य नामान्तरम् अस्ति। शास्त्रमिदं प्रत्यक्षमपि। सिद्धान्तपद्धत्या आनीतग्रहस्फुटे आकाशे ग्रहाणामवलोकनं सिद्ध्यति इत्यनेनैव प्रमाणभागे अस्य प्रत्यक्षत्वम्। तद्वदेव ग्रहणकालिकविचाराणि च। भूमौ विद्यमानस्य मानवस्य चक्षुषा एव दृश्यमानयोः ग्रहणयोः स्पर्शमोक्षादिविचाराः अपि अनेनैव शास्त्रेण सिद्ध्यति। अतः एव प्रत्यक्षं ज्योतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ इत्युक्तिः। तस्य उपरागविचारस्य लघु विचिन्तनं क्रियतेऽस्मिन् प्रबन्धे।

**मुख्यशब्दाः**

सूर्यचन्द्रग्रहणे, ग्रहणकारणम्, ग्रहणे ग्राह्यग्राहकौ, स्पर्शमोक्षकालौ ।

**उपोद्घातः**

अपौरुषेयस्य वेदस्य षडङ्गेष्वन्यतमं वेदपुरुषस्य चक्षुरूपं स्थानमावहति ज्योतिश्शास्त्रम्। शास्त्रमिदं दिग्देशकालदर्शकं भवति। कालान्तरे विकसितस्यास्य शास्त्रस्य फलभागः सिद्धान्तभागः इति द्विधा विभागः जातः। ततः त्रिस्कन्धाः सिद्धान्तसंहिताहोराः, अनन्तरं षडङ्गानि जातकप्रश्नमुहूर्तनिमित्तगोलगणितानि[1] च आविर्भूतानि। ज्योतिश्शास्त्रे विद्यमानानां विषयाणां वैविद्ध्यकारणादेव एते विभागाः सम्भूताः। वेदोक्तकर्मणां कालनिर्धारणाय प्रवर्तते इत्यतः एव शास्त्रस्यास्य वेदाङ्गत्वम्।

[1] प्रश्नमार्गः 6-1

तथैव ज्योतिश्शास्त्रस्य कालविधानशास्त्रम् इति ख्यातिः वर्तते। तदेवं लगधमुनि स्वीयग्रन्थे दर्शयति-

**वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्व्या विहिताश्च यज्ञाः।**
**तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञान्।।**[1]

शास्त्रमिदम् भुवं परितः दृश्यमानान् ग्रहनक्षत्रादीन् आश्रित्य प्रवर्तते। आकाशे विद्यमानानां ज्योतिर्गोलानां निरीक्षणपरीक्षणेनैव शास्त्रस्यास्य प्रवृत्तिः। ते ज्योतिर्गोलाः गत्यादिभेदैः ग्रहनक्षत्रादि विभिन्ननाम्नि अभिधीयन्ते।

**श्रृणु विप्र प्रवक्ष्यामि भग्रहाणां परिस्थितिम्।**
**आकाशे यानि दृश्यन्ते ज्योतिर्बिम्बान्यनेकशः।।**
**तेषु नक्षत्रसंज्ञानि ग्रहसंज्ञानि कानिचित्।**
**तानि नक्षत्रनामानि स्थिरस्थानानि यानि वै।।**
**गच्छन्तो भानि गृह्णन्ति सततं ये तु ते ग्रहाः।**
**भचक्रस्य नगाख्यंशाः अश्विन्यादि समाह्वयाः।।**[2]

भुवं परितः विद्यमाने आकाशे राशिचक्रं सङ्कल्प्य तस्मिन् स्थिरस्थानानि ज्योतिर्गोलानि नक्षत्राणि तथा तन्मध्ये नियतगत्या चरन्तः प्रकाशगोलाः ग्रहाः इति च गृहीत्वा कालविषयकचिन्तनानि प्रवर्तन्ते। एषां ग्रहनक्षत्रादीनामाधारेण भारतीयज्योतिश्शास्त्रपद्धतिः प्रवर्तते। एवम् आनीतग्रहस्फुटेन कालज्ञानोपपत्तिः सिद्ध्यति। तदर्थं विद्यमानस्य ग्रहगणितस्य दश भेदाः वर्तन्ते, द्युगुणानयनमित्यादि।[3] तेषु ग्रहगणितान्तर्भूतविषयेषु अन्यतमः भवति उपरागः अथवा ग्रहणम्। ग्रहणे द्वे,

---

[1] वेदाङ्गज्योतिषम् 4-1

[2] बृहत्पराशरहोराशास्त्रम् 3- 2,3,4

[3] प्रश्नमार्गः 1-19, 20

सूर्यग्रहणम्, चन्द्रग्रहणम् चेति। आकाशस्थग्रहनक्षत्रादिज्योतिर्गोलानां निरीक्षणावसरे आगतस्य अप्रतीक्षितसम्भवविकासस्य कारणं किमिति ज्ञातुं जिज्ञासूनाम् आचार्याणां मध्ये अनेकविचाराः प्रवृत्ताः स्युः। तेषाम् बुद्धिमण्डले तस्याः समस्यायाः समाधानमपि दृष्टमस्ति। तैः अस्मदाचार्यैः ग्रहणावस्था, ग्रहणकालः, ग्रहणदैर्घ्यम् इत्यादिविषयेषु महती चर्चा कृता दृश्यते। प्रबन्धेऽस्मिन् सूर्यचन्द्रग्रहणयोः परिचयः दिङ्मात्रेण प्रस्तूयते।

**ग्रहणपरिचयः**

भूपरितः कल्पिते राशिचक्रे ग्रहाः पूर्वाभिमुखं गच्छन्तः इव दृश्यन्ते। राशिचक्रे दर्शने अचञ्चलत्वात् स्थिररूपेण प्रदीयमानाः ताराः, तन्मध्ये नियतगत्या पूर्वाभिमुखं चरन्तः इव दृश्यमानाः ग्रहाश्च भवन्ति। तेषु सूर्यचन्द्रौ प्रकाशकग्रहौ, अन्ये पञ्च ताराग्रहाः च।[1] तेषु स्वयं प्रकाशमानः सूर्यः एव। चन्द्रस्य स्वप्रकाशः नास्ति। सूर्यस्य प्रकाशस्य प्रतिफलनेनैव चन्द्रस्य दर्शनं भवति। अर्थात् सूर्यात् निर्गतप्रकाशकिरणानि चन्द्रे पतित्वा तेषां किरणानां प्रतिफलनं भवति, तैः किरणैः एव भूमौ विद्यमानानां चन्द्रदर्शनं भवति। अतः कदाचित् भूमेः छायायां चन्द्रस्य प्रवेशनवशात् सूर्यस्य प्रकाशः चन्द्रे न पतति चेत् चन्द्रग्रहणं, तथा भूपरितः भ्रमता चन्द्रेण सूर्यस्य प्रकाशावरोधेन चन्द्रछाया भूमौ पतति चेत् तत्रविद्यमानानां सूर्यग्रहणं च सम्भवति।

**ग्रहणकारणम्**

ग्राह्यग्राहकयोः अन्तराभावत्वं ग्रहणत्वम्। सूर्यं परितः भ्रमन्ती भूमिः। तथैव भूपरितः भ्रमन् चन्द्रः। तथापि भूमौ विद्यमानस्य अनुभवः तावत् सूर्यः भूपरितः भ्रमति इत्येव। अतः भूमौ विद्यमानस्य दृक्सूत्रे सूर्यस्य कक्षावृत्तस्य क्रान्तिवृत्तस्य तथा चन्द्रस्य

---

[1] बृहत्पराशरहोराशास्त्रम् 3- 2,3,4

कक्षावृत्तस्य चन्द्रविमण्डलवृत्तस्य च सम्पातस्थाने राहुकेतू भवतः। यदा दृक्सूत्रे अस्मिन् सम्पातस्थाने सूर्यचन्द्रौ भवतः तदा भूमौ विद्यमानानां दृष्टौ उभयोः ग्रहयोः पूर्वापर-याम्योत्तर-ऊर्ध्वाधरान्तराभावत्वं भवति। तदा ग्रहणं सम्भवति।

**तुल्यौ राश्यादिभिः स्यातामवास्यान्तकालिकौ।**
**सूर्येन्दू पौर्णमास्यन्ते भार्धे भागादिभिः समौ।।**[1]

राश्यादिभिः सूर्यचन्द्रस्फुटौ समानौ यदा भवति तदा एव सूर्यग्रहणं भवति। अतः एव अमावासीतिथौ एव सूर्यग्रहणं भवति। तथैव चन्द्रग्रहणे भूच्छायायां चन्द्रस्य प्रवेशः इत्यतः सूर्यात् षड्राश्यन्तरं चन्द्रस्य भवेत्। अतः पौर्णमीतिथौ एव चन्द्रग्रहणं सम्भवति।

सूर्यग्रहणे भूसमीपे विद्यमानस्य चन्द्रस्य छाया सूचीरूपेण भूमौ पतति। अतः चन्द्रस्य छाया भूमौ यस्मिन् देशे पतति तत्र विद्यमानानामेव सूर्यग्रहणं दृष्टिगोचरं भवति। सूर्यस्य भूमेः च मध्ये पूर्वाभिमुखं गच्छतः चन्द्रस्य छाया भूमौ यत्र पतति तत्र सूर्यग्रहणसम्भवः इति।

चन्द्रग्रहणे भूम्या अवरुद्धात् सूर्यप्रकाशात् उत्पन्नायां भूमेः छायायां चन्द्रस्य प्रवेशवशात् चन्द्रग्रहणं सम्भवति। भूमेः छायायां प्रविष्टस्य चन्द्रस्य उपरि सूर्यकिरणाभाववशात् भूमौ विद्यमानानां समेषां चन्द्रग्रहणं भवति। सूर्यग्रहणम् अमावासीतिथौ, चन्द्रग्रहणं पौर्णमीतिथौ एव सम्भवति। अर्थात् दृक्सूत्रे सूर्यग्रहणे चन्द्रसूर्ययोः अन्तराभावः($0^0$), तथा चन्द्रग्रहणे उभयोः चन्द्रसूर्ययोः परमान्तरं ($180^0$) च भवति।

---

[1] सूर्यसिद्धान्तः -चन्द्रग्रहणाधिकारः -7

**ग्रहणे ग्राह्यग्राहकौ**

सूर्यग्रहणे सूर्यस्य किरणः चन्द्रेण अवरुद्धः भवतीत्यतः, सा चन्द्रस्य छाया यस्मिन् भूविभागे पतति तस्मिन् प्रदेशे सूर्यग्रहणं भवति। अतः सूर्यग्रहणे ग्राह्यः सूर्यः, ग्राहकः चन्द्रः च भवति। ग्राहकः चन्द्रः ग्राह्यं वस्तु सूर्यकिरणं गृह्णाति इत्यतः सूर्यग्रहणसम्भवः।

**छादको भास्करस्येन्दुरधःस्थो घनवद्भवेत्।**
**भूच्छायां प्राङ्मुखश्चन्द्रो विशत्यस्य भवेदसौ।।**[1]

चन्द्रग्रहणे पूर्वाभिमुखं गच्छन् चन्द्रः भूछायायां प्रविशति इत्यतः तत्र ग्राह्यः चन्द्रः, ग्राहकः भूछाया च भवति। ग्राहिकायां भूछायायां ग्राह्यस्य चन्द्रस्य प्रवेशनेनैव भूमौ चन्द्रग्रहणं दृष्टिगोचरं भवति।

**ग्रहणे स्पर्शमोक्षौ**

सर्वे सप्त ग्रहाः पूर्वाभिमुखं गच्छन्तः इव अनुभूयते भूनिवासिभिः। अतः एव ग्रहणयोः स्पर्शमोक्षयोः दिशः अपि भिद्यन्ते। सूर्यग्रहणे पूर्वाभिमुखं गच्छता ग्राहकेण चन्द्रेण सूर्यकिरणानाम् अवरोधः क्रियते इत्यतः सूर्यग्रहणे स्पर्शः सूर्यबिम्बस्य पश्चिमभागे, मोक्षः सूर्यबिम्बस्य पूर्वभागे च भवति।

चन्द्रग्रहणे पूर्वाभिमुखं गच्छन् ग्राह्यः चन्द्रः ग्राहिकायां भूछायायां प्रविशति इत्यतः ग्रहणस्पर्शः पूर्वस्यां दिशि, मोक्षः चन्द्रबिम्बस्य पश्चिमस्यां दिशि च भवति।

**उपसंहारः**

एवं सूर्यग्रहणस्य चन्द्रग्रहणस्य च सामान्यपरिचयः अत्र कृतः। इतोऽपि ग्रहणयोः पातादिविशेषविचाराः विद्यन्ते। ग्रहणदैर्घ्यं, ग्रहणस्य अवस्थाभेदाः इत्याद्यनेके

[1] सूर्यसिद्धान्तः - चन्द्रग्रहणाधिकारः 9

विचाराः आचार्यैः ग्रन्थेषु विस्तरेण चर्चिताः वर्तन्ते। अत्र पत्रेऽस्मिन् सूर्यग्रहणस्य चन्द्रग्रहणस्य च परिचयः प्रदत्तः विद्यते। भारतीयज्योतिर्विदाम् आचार्याणाम् आकाशस्थज्योतिर्गोलानाम् उपरि आर्जितस्य ज्ञानस्य अवबोधः प्रत्यक्षेण अनुभूयमान-एतादृशचिन्तनैः लोके प्रसारयितुं शक्यते इति शम्।

**परिशीलितग्रन्थसूची**

आर्यभटीयम् – आर्यभटः, चौखम्बा सुरभारती प्रकाशन्, वाराणसी, 2013
पञ्चाङ्गविज्ञानम् - श्री दीनानाथ झा, सम्पादकः-श्री मुरलीधर ठाक्कूर्, चौखम्बा संस्कृतसीरीस आफीस्, बनारस, 1951
प्रश्नमार्गः – व्याख्याता-भासिन जे. एन्, रञ्जन पब्लिकेशन्स, न्यूदिल्ली, 1978
बृहत्संहिता – वराहमिहिरः, देवी बुक्स् स्टाल, कोटुङ्ङल्लूर, केरला, 2001
बृहत्पराशरहोराशास्त्रम् – महर्षि पराशरः, रञ्जन् पब्लिकेषन्स्, न्यूदिल्ली, 2010
वेदाङ्गज्योतिषम् – लगधमुनिः, चौखम्बा विद्याभवन्, वाराणसी, 2005
सिद्धान्तशिरोमणिः – भास्कराचार्यः, चौखम्बा सुरभारती प्रकाशन्, वाराणसी, 2013
सूर्यसिद्धान्तः – व्याख्याता- श्री कपिलेश्वरशास्त्री, चौखम्बा संस्कृतभवन, वाराणसी, 2006

**Dr. Jayakrishnan Nampoothiri N.D.**
Assistant Professor, Dept of Sanskrit Jyothisha
Government Sanskrit College
Thiruvananthapuram, Kerala – 695034
Mobile No : 9048879799
Mail Id : jayangsc@gmail.com



# वक्रोक्तिरेवालङ्कारो नान्यः – इति कुन्तकमतसमीक्षा

**डा. सोमनाथ सेनापतिः**

**शोधसारः –**

विदितमिदं विद्वद्भिः अलङ्कारशास्त्रनये अलङ्काराणां महत्त्वपूर्णं स्थानं वर्तते। गुणालङ्काररीत्यनुगुणं षड्सम्प्रदायाः साहित्यनिधौ प्रथिताः भवन्ति। षड्सु सम्प्रदायेषु प्रथमसम्प्रदाय अलङ्कारसम्प्रदायः। काव्यकटौ अलङ्कारो हि काव्यरमणीयतां जनयतीति अलङ्कारसाम्प्रदायिकाः आमनन्ति। अयमलङ्कारः शब्दार्थभेदेन द्विधा विभज्यते।

वस्तुतः अलङ्काराणां चर्चा प्रारब्धा भरतमुनेः नाट्यशास्त्रे[1]। तत्र तु उपमारूपकभेदेन अलङ्काराणां संख्या चत्वारः। मुनिभरतोत्तरकाले भामहाचार्यस्य आगमनमभूत्। तेन प्रणीते काव्यालङ्कारग्रन्थे अलङ्काराणां महती चर्चा वर्तते। तत्परं दण्ड्याचार्येण तदीये काव्यादर्शग्रन्थे अलङ्काराणां विषये चर्चा कृतास्ति। तदनु आचार्यः उद्भटः भामहविवरणग्रन्थे, वामनाचार्यः काव्यालङ्कारसूत्रवृत्तिग्रन्थे, आचार्यः रुद्रटश्च काव्यालङ्कारग्रन्थे अलङ्काराणां विषये गहनातिगहनचर्चां कृतवन्तः। ख्रिष्टाब्दीय-नवमशतके आनन्दवर्धनाचार्यः ध्वनिसिद्धान्तं निरूपितवान्। ध्वनिसिद्धान्तस्य परं राजानकः कुन्तकः वक्रोक्तिसिद्धान्तस्य प्रतिष्ठापनाय वक्रोक्तिजीवतग्रन्थं व्यरचयत्। यद्यपि वक्रोक्तेः स्वरूपविस्तारश्च कुन्तकस्येति सर्वविदितः, परं वक्रोक्तिसिद्धान्तस्य श्रेयस्तु भामहाचार्यस्यैव। भवतु नाम, वक्रोक्तिजीवितग्रन्थे प्रथमोन्मेषे राजानकः कुन्तकः स्वडिण्डिम् “वक्रोक्तिरेवालङ्कारो नान्यः कश्चिदिति[2]” प्रतिज्ञायते इति

---

[1] उपमा रूपकं चैव दीपकं यमकं तथा।
अलङ्कारास्तु विज्ञेयाश्चत्वारो नाटकाश्रयाः।। (ना.शा.16.40)

[2] ननु च किमिदं प्रसिद्धार्थविरुद्धं प्रतिज्ञायते यद्वक्रोक्तिरेवालङ्कारो नान्यः कश्चिदिति। वक्र.जी.पृ. 49

पूर्वपक्षवचनम्। वचनमिदं हि शोधस्यास्य मूलम्।

यतो हि प्राचीनानाम् आलङ्कारिकानाम् अलङ्कारचिन्तामार्गे शब्दार्थभेदेन अनुप्रासः-यमकम्-उपमा-रूपकम्-स्वभावोक्तिः-दीपकम्-वक्रोक्तिः इत्यनेन अनेके प्रमुखा अलङ्कारभेदाः आगताः, यथा वा कालिदासादिनां महाकवीनाम् उपमादय अत्यभीष्टाः, तर्हि कथम् वा अयं कुन्तकाचार्यः प्रतिज्ञायते यत् वक्रोक्तिरेवालङ्कारः नान्यः। वस्तुतः अनेन प्रतिज्ञावाक्येन सः स्वभावक्तिरलङ्कारस्य अलङ्कारत्वखण्डने प्रयासं करोति। किं तर्हि वक्रोक्तिरेवालङ्कारः, स्वभावोक्तेः अलङ्कारत्वं नास्ति वा, यदि नास्ति अङ्गीक्रियते तर्हि कुतो नास्ति, किं वा समाधानम् ? एतेषां कल्पितप्रश्नानां समाधानाय विमर्शनाय च इयं समीक्षा आगता शोधपत्रे।

**मुख्यशब्दाः –** वक्रोक्तिः, अलङ्कृतिः, अलङ्कार्यम्, स्वभावोक्तिः, जातिः, वार्ता, डिम्भः, शाकटिवाक्यम्, स्कन्धः, अलङ्कारः, प्रतिज्ञा, समीक्षा, भवति, इति।

**समीक्षा**

सर्वादौ वक्रोक्तिवादी भामहाचार्यः स्वभावोक्तिविषये कस्यचित् वस्तुनः अवस्थावर्णनं स्वभावः, स्वभावोक्तिरपि अलङ्कार इति केचन कथयन्ति केचित् नेत्युवाच[1]। अनेन वक्रोक्तिरहितस्य स्वभावोक्तेः अनिर्वचनीयत्वं प्रत्यपादि। नाम स्वभावोक्तिः वक्रोक्तावन्तर्भूता उत स्वभावक्तौ वक्रोक्तिः विद्यते इति निश्चिते ताटस्थं प्रकटयति। यथा शस्यक्षेत्रे प्रविष्टस्य गोः वारणाय कश्चन बालः सशब्दं दण्डेन गां वारयति[2], अत्र स्वभावोक्तिः उत वक्रोक्तिः विद्यते इत्यस्य यथार्थरहस्यबोधनाय

---

[1] स्वभावोक्तिरलङ्कार इति केचित् प्रचक्षते।
अर्थस्य तदवस्थत्वं स्वभावोऽभिहितो यथा।। (काव्या.लं.2.93)

[2] आक्रोशन्नाह्वयन्नन्यानाधावन्मण्डलैर्नुदन्।
गा वारयति दण्डेन डिम्भः शस्यावतारणी।। (काव्या.लं.2.94)

लौकिकज्ञानम् अपेक्षितम्। सुतरां अनिर्वचनीयत्वात् वार्तामात्रम्।

स्वभावोक्तिवादी दण्ड्याचार्यः काव्यादर्शे स्वभावोक्तिरलङ्कारस्य विशदां चर्चां कृतवान्। विभिन्नावस्थायां जातिगुणक्रियाद्रव्याणां पदार्थानां स्वरूपप्रकटनकारी अलङ्कारः हि स्वभावोक्तिः, या तु जात्यालङ्कारः इति नाम्ना परिचिता[1]। अलङ्कारस्यास्य साम्राज्यम् अतिविस्तृतम्। तर्हि यस्य साम्राज्यम् अतिविस्तृतं[2], परं कुत न स्थानं कुन्तकस्य काव्यचिन्तने। अग्रे विचार्यते।

उद्भटाचार्योऽपि हरिणशावकादिनां स्वजात्यानुसारेण[3] लीलाविशेषवर्णनं स्वभावोक्तिरलङ्कारम् अङ्गीकृतवान्।

रुद्रटाचार्यस्य अभिप्रेतविषयः वास्तवः। वास्तवः नाम वस्तुनः स्वरूपकथनम्, वाच्यार्थविशेषः। अयं वास्तवः पुष्टार्थम्, विवक्षितार्थस्याविपरीतम्, निरूपम्, अनधिकं तथा अश्लिष्टरूपं भवति। अपुष्टार्थस्य निराकरणाय पुष्टार्थस्य प्रयोगः भवति। गोशावकः बलीवर्दः मुखेन तृणानि अत्ति, शिश्नेन मूत्रं मुञ्चति, पायुना मलं त्यजति इत्यस्मिन् उदाहरणवाक्ये[4] पुष्टार्थस्य अभावात् न वास्तवः (स्वभावोक्तिरलङ्कारः) ।

---

[1] नानावस्थं पदार्थानां रूपं साक्षाद्विवृण्वती।
स्वभावोक्तिश्च जातिश्चेत्याद्या सालङ्कृतिर्यथा।। (का.दर्श. 2.8)

[2] जातिक्रियागुणद्रव्यस्वभावाख्यानमीदृशम्।
शास्त्रेष्वस्यैव साम्राज्यं काव्येष्वप्येतदीप्सितम्। (का.दर्श. 2.13)

[3] मृगबालादे स्वसमुचिते व्यापारे प्रवृत्तस्य ये हेवाका स्वजात्यानुरूप्येणाभिनिवेशविशेषास्तदुपनिबन्ध स्वभावोक्तिः। (अलं.सा.सं.ल.वृ.पृ. 49)

[4] गौरपत्यं बलीवर्दस्तृणान्यत्तिमुखेन सः।
मूत्रं मुञ्चति शिश्नेन अपानेन तु गोमयम्।। (रु.काव्या.लं.पृ.191)

वास्तवमूलात्रयोदशालङ्कारेषु[1] जातिनामाख्यः अलङ्कारः हि स्वभावोक्तिरलङ्कारः। अनेन विचारेण रुद्रटः स्वभावोक्तिवादी इति वक्तुं शक्यते।

एवंरूपेण कुन्तकपूर्ववर्तिनः आलङ्कारिकाः स्वभावोक्तेरलङ्कारस्य[2] यथार्थताम् आलोचितवन्तः। तत्सत्त्वेऽपि राजानकः कुन्तकः स्वडिण्डिम् उद्घोषयति वक्रोक्तिरेवालङ्कारः नान्यः। अर्थात् स्वभावोक्तिरलङ्कारस्य अलङ्कारत्वं नास्ति। यदि अलङ्कारत्वेन अङ्गीक्रियते, तर्हि तत्र अलङ्कार्यरूपं किं वस्तुः अवशिष्यते ?

वक्रोक्तिरलङ्कारमन्यमानः कुन्तकः विवक्षति पदार्थानां स्वरूपाधायकः धर्मभूतस्वभावः हि उक्तिः। सुतरां स्वभाववर्णनभिन्नं काव्यशरीरस्थानीयं किं वस्तु अलङ्कार्यरूपं भवति ? प्रश्नस्यास्य विपक्षे स्वभावोक्तिवादिनः कथयन्ति – 'भवतां वक्रोक्तिजीवितग्रन्थे प्रथमोन्मेषे षड्संख्यकायां कारिकायां[3] भवत्यैव अलङ्कार अलङ्कार्यं युगपत् विद्यते प्रोक्तं खलु, तद्वद् स्वभावोक्तिरलङ्कारेऽपि अलङ्कृतिरलङ्कार्यं युगपत् विद्यते।'

पूर्वपक्षिणां स्वभावोक्तिवादिनां मतनिरसनाय कथयति 'तत्र यद्यपि पारमार्थिकविचारेण अलङ्कृतिरलङ्कार्ययोः भेदः नास्ति सत्यं, परम् असत्यभूते व्याकरणशास्त्रस्य वर्णपदन्यायेन वाक्यपदन्यायेन च प्रकृतिप्रत्ययादिनां विभागः कर्तुं शक्यते, तद्वद् अपोद्धारबुद्ध्या कर्तुं शक्यते।'

---

[1] हेतुः कारणमाला व्यतिरेकोऽन्योन्यमुत्तरं सारम्।
सूक्ष्मं लेशोऽवसरो मिलीतमेकावली भेदाः।। (रु.काव्या.लं.7.12)

[2] अलङ्कारकृतां येषां स्वभावोक्तिरलङ्कृतिः।
अलङ्कार्यतया तेषां किमन्यदवतिष्ठते।। (वक्रो.का.जी.1.11)

[3] अलङ्कृतिरलङ्कार्यमपोद्धृत्य विवेच्यते।
तदुपायतया तत्त्वं सालङ्कारस्य काव्यता।। (वक्रो.का.जी.1.6)

राजानकः कुन्तकः स्वभावस्य[1] यथार्थस्वरूपं कथनपुरःसरं कथयति स्वभावोक्तिरलङ्कार अलङ्कारत्वेनाङ्गीक्रियते चेत्, तद्भिन्नः अलङ्कार्यरूपः कश्चन पदार्थः भवेत्। परं यतो हि पदार्थानां स्वरूपवर्णन विहाय तेषां वर्णनमेव शशविषाणन्यायेन असम्भवः, सुतरां स्वभावरहितपदार्थः आकाशकुसुमवत् निरूपाख्यवशात्[2] स्वभावव्यतिरेकेन वक्तुमेव न युज्यते।

यतो हि स्वभावयुक्तवाक्यमेव कथनयोग्यं स्वभावोक्तिरलङ्कारविशेष-काव्यात्मवाच्यं भवति चेत्, शाकटिवाक्ये[3] अतिव्याप्तिः स्यात्। शाकटिवाक्यं लौकिकसाधारणजनवाक्यं स्वभावोक्तिरलङ्कारान्वितं भवति चेत्, काव्यस्य हि काव्यत्वहानिः भविष्यति। कुतश्चेत् सालङ्कारं वाक्यं हि काव्यं भवति खलु। अपि च, स्वभावकथनं काव्यशरीरस्थानीयं, काव्यशरीरञ्च स्वभावोक्तिरलङ्कारविशेषं भवति चेत्, तेन अलङ्कारेण कस्य अलङ्कार्यस्य अलङ्करणं भविष्यति। अलङ्कार्यरलङ्कारयोः तत्त्वमेकं भवितुं नैव अर्हति, यथा संसारे कोऽपि मनुष्यः स्वयमेव स्वस्य स्कन्धारोहणं[4] कर्तुं नैव शक्नोति तथैव।

तुष्यतुदुर्जनन्यायेन स्वभावोक्तिः अलङ्कारत्वेन अङ्गीक्रियते चेत्, सर्वे अलङ्काराः संसृष्टि-सङ्करालङ्कारविषयाः[5] भवेयुः, शुद्धोपमादिनां स्थानमेव नैव सम्भवति। सुतराम्

---

[1] अस्मादभिधानप्रत्ययाविति भावः, स्वस्यात्मनो भावः स्वभावः। (वक्रो.का.जी.पृ.51)

[2] वस्तु तद्रहितं यस्मान्निरूपाख्यं प्रसज्यते। (वक्रो.का.जी.1.12)

[3] शाकटिवाक्यानामपि सालङ्कारता प्राप्नोति, स्वभावोक्तियुक्तस्तेन। (वक्रो.का.जी.पृ.51)

[4] शरीरं चेदलङ्कारः किमलङ्कुरुतेऽपरम्।
आत्मैव नात्मनः स्कन्धं क्वचिदप्यधिरोहति।। (वक्रो.का.जी.1.13)

[5] भूषणत्वे स्वभावस्य विहिते भूषणान्तरे। भेदावबोधः प्रकटस्तयोरप्रकटोऽथवा।।
स्पष्टे सर्वत्र संसृष्टिरस्पष्टे सङ्करस्ततः।

आकाशचर्वणतुल्यः स्वभावोक्तिरलङ्कारः असत्यभूतः, "वक्रोक्तिरेवालङ्कारो नान्यः" इति वचनं युक्तिपूर्वकं सिद्धम्।

परन्तु व्यक्तिविवेककारः महिमभट्टः कुन्तकस्य उपर्युक्तमतं खण्डितवान्। तन्मते पदार्थानां सामान्यं विशिष्टञ्च रूपद्वयं भवति। सामान्यस्तु साधारणजनविषयः विशिष्टञ्च प्रतिभासम्पन्नः सत्कविविषयः[1]। विशिष्टः हि स्वभावोक्तिरलङ्कारपदवाच्यं भवति कविप्रतिभया अर्थस्य साक्षात् प्रतीतिवशात्[2]। सामान्यस्तु अन्येषामलङ्काराणाम् अलङ्कार्यरूपः भवति। वक्रोक्तिमन्यमानः कुन्तकः स्वभावोक्तिरलङ्कारखण्डनसमये पदार्थानां सामान्यरूपं[3] प्रत्यक्षीकृतं न तु विशेषरूपमिति आक्षपेण कथयति।

कुन्तकोत्तरालङ्कारिकेषु भोजराजः वस्तुनः नानावस्थायां जायमानं रुपकथनेन जातिपदवाच्यं स्वभावोक्तिरलङ्कारम्[4], डिम्भः नाम शिशुगजाश्वादिनां क्रिया तथा

---

अलङ्कारान्तराणां च विषयो नावशिष्यते।। (वक्रो.का.जी.1.14 -15)

[1] कथं तर्हि स्वभावोक्तेरलङ्कारत्वमिष्यते। न हि स्वभावमात्रोक्तौ विशेषः कश्चनानयोः।।
उच्यते वस्तुनस्तावद्द्वैरूप्यमिह विद्यते। तत्रैकमत्र सामान्यं यद्विकल्पैकगोचरः।।
स एव सर्वशब्दानां विषयः परिकीर्त्तितः। अत एवाभिधेयं ते श्यामलं बोधयन्त्यलम्।।
विशिष्टमस्य यद्रूपं तत् प्रत्यक्षस्य गोचरः। स एव सत्कविगिरां गोचरः प्रतिमाभुवाम्।।
(व्य.वि.2.113-116)

[2] अर्थ स्वभावस्योक्तिर्या सालङ्कारतयामता।
यतः साक्षादिवाभान्ति तत्रार्थाः प्रतिभार्पिताः।। (व्य.वि.2.120)

[3] सामान्यस्तु स्वभावो यः सोऽन्यालङ्कारगोचोरः।
क्लिष्टमर्थमलङ्कर्तुमन्यथा कोहिशङ्कुयात्।। (व्य.वि.2.121)

[4] नानावस्थासु जायन्ते यानि रूपाणि वस्तुनः।
स्वेभ्यः स्वेभ्यो निसर्गेभ्यस्तानि जातिं प्रचक्षते।। (सर.क. 3.4)

रूपकथनेन मम्मटाचार्यः[1], बालकपशुपक्ष्यादिनां दुर्ज्ञेयक्रियारूपवर्णनेन विश्वनाथः[2], वस्तुनां सूक्ष्मस्वभावस्य यथार्थकथनेन रुय्यकः[3], चारुत्वेन साकं स्वाभाविकवस्तुनिरूपणेन विद्यानाथश्च[4], एते आलङ्कारिकाः स्वभावोक्तिरलङ्कारम् अङ्गीकुर्वन्ति।

**निष्कर्षः –**

उपर्युक्तसमीक्षया वक्तुं शक्यते यत्, यद्यपि वक्रोक्तिवादिनौ भामहकुन्तकौ स्वभावक्तिरलङ्कारं नाङ्गीकुरुतः, परं दण्डी, वामनः, उद्भटः, भोजः, महिमभट्टः, मम्मटादयः सादरं स्वभावोक्तिरलङ्कारम् अङ्गीकुर्वन्ति। यथा अलङ्कारेषु वक्रोक्तिः प्रसिद्धालङ्कारः तथैव स्वभावोक्तिरपि प्रमुखालङ्कारः इति मे मतिः।

**सन्दर्भग्रन्थाः**

1.अलङ्कारसर्वस्वम्- डा. रेवाप्रसादद्विवेदी, चौखम्भा संस्कृत संस्थान, वाराणसी, चतुर्थसंस्करणम्, 2016

2. काव्यालङ्कारः- डा. रामानन्द शर्मा, चौखम्भा सीरीज आफिस, वाराणसी, द्वितीयसंस्करणम्,2016

3. काव्यालङ्कारसारसंग्रहः- नारायण बनहट्टी, प्राच्यविद्यासंशोधनमन्दिरम्, प्रथमसंस्करणम्,1925

4. काव्यादर्शः - धर्मेन्द्रकुमारगुप्तः, मेहरचन्द लछमनदास, दिल्ली,

---

[1] स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्। (का.प्र.10.168)

[2] स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम्। (सा.द.10.92)

[3] सूक्ष्मवस्तुस्वभावयथावद्वर्णनं स्वभावोक्तिः। (अ.सर्व. सू.79)

[4] स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्। (प्र.रु.पृ.495)

प्रथमसंस्करणम्,1673
5. काव्यप्रकाशः - पं. मधुसूदन शास्त्री, ज्योतिष प्रकाशन, वाराणसी, 1972
6. नाट्यशास्त्रम् - डा. पारसनाथद्विवेदी, सम्पूर्णाननद्संस्कृतविश्वविद्यालयः, वाराणसी, 2001
7. प्रतापरुद्रीयम् - आचार्य मधुसूदनशास्त्री, चौखम्भा कृष्णदास अकादमी, वाराणसी, 2016
8. रुद्रट-काव्यालङ्कारः - श्री रामदेव शुक्ल, चौखम्भा विद्याभवन, वाराणसी
9. वक्रोक्तिकाव्यजीवितम् - श्री राधेश्याम मिश्र, चौखम्भा संस्कृत संस्थान, वाराणसी, चतुर्थसंस्करणम्, 1983
10. व्यक्तिविवेकः – त. गणपतिशास्त्री, अनन्तशयनसंस्कृतग्रन्थालयः, क्रैस्ताब्दाः, 1909
11. सरस्वतीकण्ठाभरणम् - पण्डितकेदारनाथशर्मा, पाण्डुरङ्ग जावजी, मुम्बाइ, 1984
12. साहित्यदर्पणः – आचार्य शेषराजशर्मा रेग्मी, चौखम्बा कृष्णदास अकादमी, 2016

**Dr. Somnath Senapati**
Guest Faculty (Assistant professor Grade),
Dept. of Sahitya, CSU-Guruvayoor Campus,
Kerala - 680551
Phone no - 7795266020
Email - senapatisomnath500@gmail.com



# सन्निकर्षविचारः

**शशाङ्क शिवराम भट्टः**

**शोधसारः**

नैयायिकैः अङ्गीकृतेषु प्रत्यक्षानुमानोपमानशब्दाख्येषु प्रमाणेषु प्रथमं प्रमाणं भवति प्रत्यक्षम्। तत्फलं भवति प्रत्यक्षप्रमा, तयोर्मध्ये व्यापारः भवति इन्द्रियार्थसन्निकर्षः, स च लौकिकालौकिकभेदेन द्विविधः, तत्र लौकिकः संयोगादिभेदेन षोढा विभक्तः अलौकिकश्च त्रेधा, स सर्वोपि प्रत्यक्षज्ञाने हेतुः भवति।

**मुख्यशब्दाः**

सन्निकर्षः, लौकिकप्रत्यासत्तिः, अलौकिकप्रत्यासत्तिः, उपनीतभानम्

**शोधलेखः**

नैयायिकैः प्रत्यक्षानुमानोपमानशब्दाख्यानि चत्वारि प्रमाणान्यङ्गीकृतानि। तज्जन्यप्रमापि प्रत्यक्षानुमित्युपमितिशाब्देन चतुर्धा भिद्यते। तत्र इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं[1], ज्ञानाकरणकं ज्ञानं वा प्रत्यक्षमिति कथ्यते। सर्वतन्त्रसिध्दमिदं यत् प्रत्यक्षं तच्च लौकिकालौकिकभेदेन द्विविधम्। तत्र लौकिकप्रत्यक्षहेतुः सन्निकर्षः संयोगादिभेदेन षड्विधः प्रदर्शितः वर्तते तर्कसङ्ग्रहमुक्तावल्यादिग्रन्थेषु। अलौकिक-प्रत्यक्षहेतुः सन्निकर्षः सामान्यलक्षणः ज्ञानलक्षण: योगजधर्म चेति त्रिविध इति निरूपितो विद्यते।

षोढा संनिकर्षस्तु न्यायवार्तिके प्रस्तुतः, सूत्रे भाष्ये वा न क्वापि दृश्यते। एतं विषयमधिकृत्य न्यायभूषणकाराः[2] इत्थं किंचिद्विचारयन्ति – आचार्याध्ययनपादनामा न्यायसूत्रभाष्यकारः निकर्षशब्देनैव संबन्ध इत्यर्थे लब्धे 'सम्' इत्युपसर्गबलात् संभवी

---

[1] इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारी व्यवसायात्मकं प्रत्यक्षम्। (न्या.सू.1.1.5)

[2] न्यायभूषणम् पृ० १६७-१६८

संबन्धः संनिकर्षशब्देनोच्यते, संभवी च संबन्धः षड्विध एवेति प्रत्यपादयत्। तन्न वक्तुं शक्यते, तथा सति 'नि' इत्युपसर्गस्य व्यर्थत्वापत्तिः। तद्यथा धातूनामनेकार्थत्वात् कर्षशब्देनैव संबन्धः इत्यर्थे लब्धे 'सं'शब्दमहिम्ना षड्विधत्वलाभे निशब्दो व्यर्थ इति। कर्षशब्दस्य संबन्धार्थकत्वेन लोकप्रसिद्धिर्नास्तीति चेत् निकर्षशब्दस्य संबन्धवाचकत्वेन कुत्र प्रसिद्धिरिति भवता वक्तव्यं भवेत्तदा। निकृष्टत्ववाचकतया हि निकर्षशब्दः लोके प्रसिध्दः न सम्बन्धवाचकतया तस्मात् 'सम्' 'नि' इत्युपसर्गद्वययुक्तः एव कृष-धातुः संबन्धमभिधत्ते यथा 'सम्' 'अव' इत्युपसर्गद्वयपूर्वकः इण्धातुः समवायम्। तस्मात् कृषधातोः सम्बन्धार्थकत्वद्योतकतया सार्थकः 'सम्' शब्दः षड्विधत्वप्रतिपादनाय नालमिति 'सम्' शब्दमहिम्ना षड्विधत्वलाभ इति व्याख्यानं न समीचीनम्। तस्माद्यथा प्रत्यक्षं प्रति सूत्रेषु अनुक्ताः अपि आलोकादयः अन्वयव्यतिरेकबलात् प्रत्यक्षहेतुतया अनुमन्यन्ते तथा षड्विधानां सन्निकर्षाणामपि प्रत्यक्षं प्रत्यन्वयव्यतिरेकबलाद्धेतुत्वं सिध्यत्येव। न्यायसिद्धोऽयमर्थो यतः सूत्रकारैर्न निराकृतः अतस्तत्संमतः इत्युन्नीयते 'परमतमप्रतिषिद्धमनुमतमिति हि तन्त्रयुक्तिः' इति न्यायात् इति।

वैशेषिकदर्शने तु संनिकर्षप्रभेदविषये न्यायसूत्रापेक्षया किंचित् स्पष्टतया सूचनमस्ति। तथा हि- आत्ममनसोः संयोगादात्मप्रत्यक्षम्[1] इति सूत्रेण आत्मविषयकप्रत्यक्षं प्रति मनस्संयोगः कारणमित्युक्तम्, तेन द्रव्यविषयकप्रत्यक्षं प्रति इन्द्रियसंयोगः कारणमिति सूचितं भवति। ततः किञ्चिदग्रे गत्वा आत्मसमवायादात्मगुणेषु[2] इति सूत्रेण आत्मसमवेतज्ञानादिगुणविषयकप्रत्यक्षे मनस्संयुक्तसमवायः कारणमिति स्पष्टीकृतम्। अनेन च संयुक्तसमवायः स्पष्टीकृतः।

[1] वै.सू.९-१-११

[2] वै. सू. ९-१-१५

तथा अग्रे ‘अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः[1]', ‘संख्याः परिमाणं कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणि[2]' इति सूत्राभ्यां द्रव्यगतगुणक्रियाविषयकप्रत्यक्षे चक्षुस्संयुक्तसमवायः कारणमिति स्पष्टमुक्तं विद्यते। 'एतेन गुणत्वे भावे च सर्वेन्द्रियं ज्ञानं व्याख्यातम्[3]' इति सूत्रेण यथा गुणप्रत्यक्षे द्रव्यसमवायो हेतुस्तथा गुणगतजातिप्रत्यक्षेऽपि संयुक्तसमवेतसमवायो हेतुरिति व्यञ्जितम्। तथैव -

'श्रोतग्रहणो योऽर्थः स शब्दः[4]' इति सूत्रेण शब्दस्य श्रोत्रजन्यप्रत्यक्षविषयत्वं लक्षणमुक्त्वा, 'एकद्रव्यत्वान्न द्रव्यम्[5]' इति सूत्रेण शब्दस्याद्रव्यत्वे आकाशात्मकैकद्रव्यसमवायस्य हेतूकरणात्, 'भूयस्त्वात् गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः[6]' तथापस्तेजो वायुश्च रसरूपस्पर्शाविशेषात्' (वै. सू. ८-२-६) इत्याष्टमिकसूत्राभ्यां घ्राणरसनचक्षुस्त्वचां चतुर्णामिन्द्रियाणां भूतप्रकृतिकत्वमुपन्यस्यता श्रोत्रस्य प्रकृतिविशेषानिर्देशेन नित्यत्वसूचनद्वारा आकाशस्य श्रोत्रत्वसूचनाच्च श्रोत्रसमवायः शब्दप्रत्यक्षे हेतुरिति ध्वनितं भवति।

‘एतेन गुणत्वे भावे च सर्वेन्द्रियं ज्ञानं व्याख्यातम्' (वै.सू. ४-१-१३) इति सूत्रोक्तन्यायेन शब्दत्वप्रत्यक्षे समवेतसमवायाख्यः संनिकर्षोऽपि सूचित एव। तथा -

‘असदिति भूतप्रत्यक्षाभावात् भूतस्मृतेर्विरोधिप्रत्यक्षवत्' (वै.सू.९-१-६) इति सूत्रं दृश्यते। तस्यायमर्थः असन् घट इत्यद्याकारकाभावप्रत्यक्षं विरोधिप्रत्यक्षवत्

---

[1] वै.सू. ४-१-८

[2] वै.सू. ४-१-११

[3] वै.सू. ४-१-१३

[4] वै.सू.२-२-२१

[5] वै.सू. २-२-२३

[6] वै.सू.८-२-५

प्रतियोगिघटप्रत्यक्षतुल्यम्। प्रतियोगिनो घटस्य प्रत्यक्षं यथानुभवसिद्धं लौकिकसंनिकर्षजन्यं च तथा अभावप्रत्यक्षमपि नापलापार्हं संनिकर्षजन्यं चेत्यर्थः। अभावप्रत्यक्षे तु प्रतियोगिनो योग्यानुपलब्धिः स्मरणं चेति सहकारिकारणद्वय-मपेक्षितमिति विशेषः। तदेवाह सूत्रे - भूतप्रत्यक्षाभावात् भूतस्मृतेरिति। भूतस्य नाम उत्पद्य विनष्टस्य घटादेः प्रतियोगिनः उपलब्ध्यभावात् स्मरणाच्चेत्यर्थः।तथा चानयोः अभावप्रत्यक्षप्रयोजकत्वं सूचितं भवति। एवञ्च अभावप्रत्यक्षस्य सन्निकर्षजन्यत्वं सूचयन् सूत्रकारः संयोगसमवायाद्यसंभवात् विशेष्यविशेषणभावात्मकं संनिकर्षमपि समसूचयत्। तथा च षड्विध इति शब्देन अविभक्तोऽपि षड्संख्याकः सन्निकर्षः वैशेषिकतन्त्रसूचित इति निश्चेतुं शक्नुमः। प्रशस्तपादभाष्ये प्रत्यक्षनिरूपणावसरे विशेषणविशेष्यभावं विना अन्ये पञ्च संनिकर्षाः निर्दिष्टाः। यस्मात् अभावपदार्थमधिकृत्य प्रशस्तपादभाष्ये निरूपणं नास्ति अतो विशेषणताख्यसंनिकर्षस्य तत्र प्रस्तावो न विद्यते।
कन्दलीकारास्तु षड्विधमपि संनिकर्षं सोदाहरणं प्रदर्शयामासुः।

प्रत्यक्षसूत्रे न्यायवार्तिककाराः[1]- 'सन्निकर्षः पुनः षोढा भिद्यते, इत्यादिना ग्रन्थेन पूर्वोक्तान् षड्विधान् संनिकर्षान् सोदाहरणं प्रादर्शयन्। सूत्रादयं विभागः कथं लभ्य इति शङ्कायाम् - 'सोऽयं संनिकर्षशब्दः संयोगसमवायविशेषण-विशेष्यभावव्यापकत्वादुपात्तः' इति ग्रन्थेन संयोगसमवायादिसाधारणं संनिकर्षशब्दं प्रयुक्तवता सूत्रकारेण संभाविताः संनिकर्षा ग्रहीतव्या इति सूचितमिति समाहितम्।

न्यायवार्तिके विशेषणविशेष्यभावः षष्ठसन्निकर्षत्वेन प्रोक्तः। स च समवायविषयकप्रत्यक्षं प्रति अभावविषयकप्रत्यक्षं प्रति च हेतुरिति प्रसाधितम्। तत्र

---

[1] न्यायवार्तिकम् पृ सं 199

टीकायाम्[1] - विशेषणभावेन संयुक्तविशेषणं समवेतविशेषणं च संगृहीतम्' इति व्याख्यानं दृश्यते।

अत्र विशेषणविशेष्यभावो नाम न एकः सन्निकर्षः, अपि तु विशेषणत्वं विशेष्यत्वं चेति सम्बन्धद्वयम्। तत्र अभावविशेषणकप्रत्यक्षे विशेषणत्वं सन्निकर्षः। अभावविशेष्यकप्रत्यक्षे विशेष्यत्वं सन्निकर्षः। तन्निर्धारणञ्च प्रतीतिव्यवहारबलात्। तत्र विशेषणत्वं पञ्चविधम् - संयुक्तविशेषणत्वम्, संयुक्तसमवेतविशेषणत्वम्, संयुक्त-समवेतसमवेतविशेषणत्वम्, समवेतविशेषणत्वम्, समवेतसमवेतविशेषणत्वञ्चेति। एवं विशेष्यत्वमपि संयुक्तविशेष्यत्वम्, संयुक्तसमवेतविशेष्यत्वम्, संयुक्तसमवेतसमवेत-विशेष्यत्वम्, समवेतविशेष्यत्वम्, समवेतसमवेतविशेष्यत्वञ्चेति पञ्चविधम्। आहत्य विशेषणविशेष्यभावो दशविधः इति न्यायभूषणे प्रत्यपादि।

तेषां क्रमेण उदाहरणानि - भूतलं घटाभाववत्, तोयस्पर्शः उष्णत्वाभाववान्, नीलत्वं शुक्लत्वाभाववत्, वीणाशब्दः तीव्रत्वाभाववान्, शब्दत्वं भेदाभाववत्, भूतले घटाभावः, तोयस्पर्शे उष्णत्वाभावः, नीलत्वे शुक्लत्वाभावः, वीणाशब्दे तीव्रत्वाभावः, शब्दत्वे भेदाभावः इति। न चैवं विशेष्यविशेषणभावस्य बहुविधत्वे षोढा सन्निकर्षः इति कथमिति चेत्तत्रोच्यते - विशेषणतात्वेन पञ्चविधविशेषणतानां विशेष्यतात्वेन च पञ्चविधविशेष्यतानामनुगमं कृत्वा विशेषणताविशेष्यतान्यतरत्वेन दशानामपि परिगणनात् षड्विधत्वं संरक्षितं भवति। न च समवायरूपाणां संयुक्तसमवाय-संयुक्तसमवेतसमवाय-समवाय-समवेतसमवायानां चतुर्णामपि समवायत्वेन एकवर्गीकरणं विधाय संयोगः, समवायः, विशेष्यविशेषणभावश्चेति त्रिधैव सन्निकर्षः

---

[1] तात्पर्यटीका पृ सं 210

कुतो न कर्तुं शक्यः इति चेत्, तत्रोच्यते - स्वतन्त्रेच्छस्य मुनेः षोढा विभागे नियोगपर्यनुयोगयोः कर्तुमशक्यत्वात्।

न्यायसारे[1] तु - 'एतपञ्चविधसम्बन्धसंबद्धविशेषणविशेष्यभावात् दृश्याभावसमवाययोर्ग्रहणम्' इत्यभिहितम्।

मणिकारास्तु केवलविशेषणता, इन्द्रियसम्बद्धविशेषणता चेति विशेषणता द्विविधा। इन्द्रियसम्बद्धविशेषणता पूर्वोक्तरीत्या पञ्चविधा। केवलविशेषणतायाः उदाहरणं तु आकाशं शब्दाभाववत् इति शब्दाभावप्रत्यक्षम् इत्यभिप्रयन्ति। 'विशेषणतया शब्दाभावस्य, इन्द्रियसम्बद्धविशेषणतया समवायघटाभावादेर्ग्रहः' इति संनिकर्षवादे तैः कथनात् ॥

अलौकिकप्रत्यक्षे तु सामान्यलक्षणा, ज्ञानलक्षणा, योगजधर्मश्चेति त्रिविधा प्रत्यासत्तिः। तत्र सामान्यलक्षणा नाम सामान्यं लक्षणं स्वरूपं यस्या इति व्युत्पत्या सामान्यस्वरूपा एव प्रत्यासत्तिः, सा च धूमत्वादिरूपा तज्ज्ञानरूपा वा। सा चाश्रयाणां निखिलधूमादीनां अलोकिकप्रत्यक्षे उपयुज्यते अतीतानागतधूमादिषु चक्षुस्संयोगादेर-सम्भवात्, यथा धूमत्वरूपसामान्यज्ञानात् सन्निकृष्टासन्निकृष्टसकलधूमविषयकं धूमाः इति अलौकिकं प्रत्यक्षं जायते। ज्ञानलक्षणा[2] तु सुरभि चन्दनमित्यत्र असन्निकृष्टस्य सुरभिगन्धस्य सौरभत्वस्य वा प्रत्यक्षं जनयति यतो हि सौरभेण सह चक्षुषः योग्यसन्निकर्षाभावात्। तथा च यद्विषकं ज्ञानं तद्विषयकमेव प्रत्यक्षं, एवञ्च ज्ञानमेव प्रत्यासत्तीभूय अलौकिकं प्रत्यक्षं जनयति इत्यर्थः।

---

[1] न्यायसारः पृ सं 167

[2] विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः।। (कारिकावली)

तत्र तृतीयं भवति योगजधर्मः। योगिनां देशकालविप्रकृष्टपदार्थप्रत्यक्षे योगजधर्मरूपः प्रत्यासत्तिः कारणम् इति। योगाभ्यासजनितः धर्मविशेषः श्रुतिस्मृतिपुराणादिप्रतिपाद्य एव योगजधर्मः इति कथ्यते। तत्र योगिनः तावत् युक्तयुञ्जनभेदेन द्विविधाः। युक्तयुञ्जानरूपयोगिद्वैविध्यात् धर्मस्यापि द्वैविध्यम्। तदुक्तं कारिकावल्यां -

योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः।
युक्तस्य सर्वदा भानं चिन्तासहकृतोपरः[1]।। इति।।

युक्तस्य तावत् योगजधर्मसहायेन मनसा आकाशपरमाण्वादि-निखिलपदार्थगोचरं ज्ञानं सर्वदैव भवितुमर्हति। युञ्जानस्य तु अलौकिकज्ञने जननीये चिन्ताविशेषोऽपि सहकारी भवति।

## आकरग्रन्थसूची Publ year …?

1. तर्कप्रवेशः (काणादसरणिः) – Pranjanam, Shrimata, Bharati Nagaram, Menase, Sringeri, Karnatak
2. तर्कसङ्ग्रहः (दीपिकाप्रकाशिका) - Elago Achukoodam, 166, R.H.Road, Mylapore, Madras
3. वैशेषिकसूत्रोपस्कारः - Vyasa Prakashan, D16/13, Manmandir, Varanasi
4. वैशेषिकरसायनम् - Sri Uttamur Viraraghavacharya, 5, Wason st, Madras
5. न्यायसिध्दान्तमुक्तावली (दिनकरी-रामरुद्री-प्रभासहिता) - Sri Balamanorama Press, Mylapore, Madras

[1] कारिकावली-प्रत्यक्षखण्डः

6. न्यायवार्तिकतात्पर्यटीका - Jayakrishnadas – Haridas Gupta, Choukhamba Sanskrit Series Office, Vidyavilas Press, Gopalmandir Lane, Banaras City
7. न्यायसारः - भासर्वज्ञः, Madras, Government Oriental Series, No CL17

**शशांक शिवराम भट्टः**
अतिथ्यध्यापकः, न्यायविभागः,
राष्ट्रियसंस्कृतविश्वविद्यालयः,
तिरुपतिः



महस्विनी – विद्वन्मण्डलीसमीक्षिता परामृष्टा च शोधपत्रिका (ISSN: 2231-0452)
**कुसुमम् :** जनवरी - जुलै २०२३ **सम्पुटम् :** प्रथमम्
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

# रामायणे प्रयुक्तेषु उपमालङ्कारेषु ज्योतिषसन्दर्भाः

**ए. श्रीनिवास शर्मा**

**प्रस्तावना -**

श्रीमद्रामायणे वाल्मीकिना बहुत्र उपमालङ्कारः प्रयुक्तः। तेषु अलङ्कारेषु ज्योतिश्शास्त्रसम्बद्धोदाहरणानि दरीदृश्यन्ते। केवलम् अलङ्कारः इत्येव न। अलङ्काराणामन्तर्गतज्योतिर्विज्ञानरहस्यविषयाः अपि ज्ञायन्ते। तेषामुदाहरणानामाधारेण भाविनि काले किं भवतीत्यपि ज्ञायते। तद्द्वारा वाल्मीकिमहर्षिरपि जोतिश्शास्त्रनदीष्णः इति ज्ञायते। लोके तथैव काव्येषु “रोहिणी शशिनं यथा”, “यथा रोहिणीं शशिनः प्रियाम्” इत्याद्यलङ्कारप्रयोगाः दृश्यन्ते। एते प्रयोगाः आदिकाव्ये रामायणे एव प्रयुक्ताः। चन्द्रः यदा रोहिण्याः समीपमागच्छति तदा तस्य दीप्तेः वृद्धिर्भवति। सर्वाणि नक्षत्राणि स्वयंप्रकाशकानि भवन्ति।

वाल्मीकिना श्रीमद्रामायणे तत्र तत्र विषयवर्णनावसरे ज्योतिश्शास्त्रसम्बद्धोदाहरणानि कथं समुल्लिखितानि इति अस्मिन् शोधलेखे प्रस्तूयते।

**उदाहरणम् (1)**

सुन्दरकाण्डे लङ्कायां हनूमान् सीतां दृष्ट्वा इत्थमचिन्तयत् -

**पीडितां दुःखसन्तप्तां परिक्षीणां तपस्विनीम्।**
**ग्रहेणाङ्गारकेणेव पीडितामिव रोहिणीम्॥**[1]

पीडिता दुःखसन्तप्ता तपस्विनी सा सीता अङ्गारकग्रस्ता रोहिणी इव दृश्यते। आकाशे रोहिणी प्रस्फुटं विद्योतते। यदा अङ्गारकः रोहिण्याः समीपमायाति तदा रोहिणी अङ्गारकेण भिन्ना भवति। एतदेव रोहिणीशकटभेदत्वेन परिकीर्त्यते

[1] 5-15-22
~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~~

ज्योतिश्शास्त्रे। अस्मिन् विषये बृहत्संहितायाम् एवमुच्यते -

**रोहिणी शकटमर्कनन्दनो यदि भिनत्ति रुधिरोऽथवा शिखी।**
**किं वदामि यदनिष्टसागरे जगदशेषमुपयाति संक्षयम्॥**[1]

रोहिणीनक्षत्रं स्वरूपतः पञ्चभिः ताराभिः शकटाकारमाकाशे प्रत्यक्षरूपेण दृश्यते तत्र शकटवामपुच्छाग्रगता तारा वेधेन वृषराशिं भिनत्ति। चन्द्र-कुज-शनैश्चरेषु यः कोऽपि भिनत्ति चेत् रोहिणीशकटस्य भेदः जायते। तदानीं संक्षयं जगदशेषमुपयाति। तदेवोच्यते गर्गेण -

**रोहिणीशकटं भौमो भिनत्त्यर्कसुतोऽथवा।**
**केतुर्वा जगतो ब्रूयात् प्रलयसमुपस्थितम्॥**

**अत्र एवं समन्वयः -**

अङ्गारकः अग्निगोलवद् भवति। अङ्गारकेण पीडिता रोहिणीवद्दर्शनात् सीता अत्र परिक्षीणा इति परिकीर्तिता। प्रसङ्गेऽस्मिन् अङ्गारकः रावणः, रोहिणी सीता इति वाल्मिकिना प्रतिपादितम्। रोहिणीनक्षत्रं ध्रुवनक्षत्रं भवति। आकाशे रोहिणी अत्यन्तसौन्दर्यवती दरीदृश्यते। तथैव जानकी अपि। रोहिणी शुभफलं प्रददाति तथैव सीतायाः दर्शनमपि शुभकारकः। कुजः अग्नितत्त्वग्रहः। तत्कारणात् लङ्कादहनं सञ्जातम्। अनन्तरम् असुरक्षयः भविष्यति इति "जगदशेषमुपयाति संक्षयम्" इति संहिताकथनेन ज्ञायते। तदेवोच्यते ग्रहलाघवे -

**कभशकटमसौ भिनत्त्यसृक् शनिरुडुयो यदि चेज्जनक्षयः।**
**भौमार्क्योः शकटभिदा युगान्तरे स्यात् सेदानीं नहि भवतीदृशी स्वपाते॥**[2]

---

[1] बृ.सं. 47-14

[2] ग्रहलाघवम्, नक्षत्रच्छायाधिकारः 7, 8

**उदाहरणम् (2)**

अरण्यकाण्डे रावणस्य सीतापहरणं रोहिणीबुधचारमिव अभिवर्णितं वाल्मीकिना-

**अभिगम्य सुदुष्टात्मा राक्षसः काममोहितः।**
**जग्राह रावणः सीतां बुधः खे रोहिणीमिव॥**[1]

कामपीडितः, दुष्टचित्तः, बुद्धिभ्रष्टः रावणासुरः बुधः रोहीणीमिव सीतां जग्राह।

यथा रामस्य अर्धाङ्गी सीता तद्वत् रोहिणीं शशिनः प्रियाम्[2]। सा रोहिणी रावणसदृशबुधेन पीडिता। तत्फलमित्थं वर्ण्यते नारदसंहितायाम् -

**वसुश्रवणविश्वेन्दुधातृभेषु चरन् बुधः।**
**भिनत्ति यदि तत्तारमवृष्टिव्याधिभीतिकृत्॥**[3]

श्रवणं, धनिष्ठा, रोहिणी, मृगशिरा, उत्तराषाढा इत्यादिषु नक्षत्रेषु बुधः सञ्चरति चेत् अवृष्टिः, रोगभयञ्च सम्भवति।

तदेवोच्यते बृहत्संहितायाम् -

**विचरन् श्रवणाधनिष्ठाप्रजापत्येन्दुवैश्वदेवानि।**
**मुद्नन् हिमकरतनयः करोत्यवृष्टिं सरोगभयम्॥**[4]

एवञ्च कश्यपः -

---

[1] 3-49-16

[2] रामचन्द्रमसं दृष्ट्वा ग्रस्तं रावणराहुणा।
प्राजापत्यं च नक्षत्र रोहिणीं शशिनः प्रियाम्॥ 6-102-33

[3] ना.सं.2-29

[4] बृ.सं.7-2

**रोहिणी वैश्वदेवं च सौम्यवैष्णववासवान्।**
**शशिजश्च यदा हन्ति प्रजा रोगैश्च पीडयेत्॥** इति।

तिलकव्याख्याने दृश्यते यथा -

"काममोहितो जग्राहेत्यत्यन्तानौचित्ये दृष्टान्तः। बुधः खे रोहिणीमिव। खे आकाशे शून्ये च रौहिणेयो बुधो रोहिणीं स्वमातरं यदि कामाद्गृह्णीयात्तदा तत्सदृशमिदं घोरं यद्यर्थोक्तौ च कल्पनमित्यतिशयोक्तिरत्र व्यङ्ग्या। सीताया सद्यो मरणपर्यवसायिशापादानं तु समूलनाशनस्य वेदवत्यंशेन प्रतिज्ञातस्य निर्वाहाय ऋषीणां देवानामग्रे रामप्रतिज्ञातस्य च निर्वाहाय॥" - इति।

बुधग्रस्ता रोहिणी यदा आकाशे दृश्यते तदा बुधः आदित्यात् दूरङ्गत इति ज्ञायते। बुधग्रहदर्शनस्य फलं नारदसंहितायामित्थं दृश्यते -

**विनोत्पातेन शशिजः कदाचिन्नोदयं व्रजेत्।**
**अनावृष्ट्यग्निभयकृदनर्थनृपविग्रहम्॥**[1]

विना उत्पातं बुधः न उदेति। यदा उदेति तदा अग्नि-जल-वायुभयाद्यनर्थाः संभवन्ति तथैव विशेषेण नृपयोर्मध्ये युद्धं सम्भवति। **अत्र समवन्वयः -** तत्कारणात् रामरावणयोर्मध्ये युद्धं सञ्जातम्। लङ्कादहनमेव अग्निभयम्। लङ्कानाशनमेवानर्थः। तदेव वराहमिहिरेणोक्तं यथा-

**नोत्पातपरित्यक्तः कदाचिदपि चन्द्रजो व्रजत्युदयम्।**
**जलदहनपवनभयकृद् धान्यार्घक्षयविवृद्धौ वा॥**[2]

तथा च भट्टोत्पलव्याख्यान्तर्गतसमाससंहितायाम् -

---

[1] ना.सं.2-48

[2] बृ.सं.7-1

**उदयं याति शशिसुतो नोत्पातविवर्जितः कदाचिदपि।**
**पवनाग्निसलिलभयदो धान्यार्घवृद्धिक्षयकृद्वा॥**

तदेवोच्यते कश्यपेन -

**नाकस्माद्दर्शनं याति विनोत्पातेन सोमजः।**
**भयवातातपहिमैरर्घवृद्धिक्षयादिभिः॥** इति।

**उदाहरणम् (3)**

अयोध्याकाण्डे भरतस्य चित्रकूटगमनसमये आकाशे सूर्यशुक्रयोः, चन्द्रबृहस्पत्योः योगः यथा सम्भवति तद्वत् राजकुमारौ रामलक्ष्मणौ सुमन्त्रेण तथैव गुहेन च मिलितवन्तौ। तत्सन्दर्भं वर्णयन् वाल्मीकिः इत्थमुवाच -

**ततः सुमन्त्रेण गुहेन चैव समीयतू राजसुतावरण्ये।**
**दिवाकरश्चैव निशाकरश्च यथाम्बरे शुक्रबृहस्पतिभ्याम्॥**[1]

सूर्यशुक्रयोः तथैव चन्द्रबृहस्पत्योः योगः शुभदायकमिति होराग्रन्थेषु प्रतिपादितवन्तः। तदुक्तं बृहज्जातके -

**तिग्मांशुर्जनयत्यथेन्दुसहितो यन्त्राश्मकारं नरं**
**भौमेनाघरतं बुधेन निपुणं धीकीर्तिसौख्यान्वितम्।**
**क्रूरं वाक्पतिनान्यकार्यनिरतं शुक्रेण रङ्गायुधै-**
**र्लब्धस्वं रविजेन धातुकुशलं भाण्डप्रकारेषु वा ॥**[2]

सूर्यशुक्रयोगः भवति चेत् जातकः नाट्यशास्त्रे कुशलः, खड्गशस्त्राद्यायुधयुक्तः, धनी भविष्यति।

---

[1] 2-99-41

[2] बृ.ज्जा. 14-1

**केन्द्रस्थिते देवगुरौ मृगाङ्काद्योगस्तदाहुर्गजकेसरीति।**
**दृष्टे सितार्येन्दुसुतैः शशाङ्के नीचास्तहीनैर्गजकेसरी स्यात्॥**
**गजकेसरिसञ्जातस्तेजस्वी धनधान्यवान्।**
**मेधावी गुणस्मन्नो राजप्रियकरो भवेत्॥**[1]

चन्द्रगुरुयोगः भवति चेत् जातकः पराक्रमी, मेधावी, कुलश्रेष्ठः, धनी, मानी च भवति। गुरुचन्द्रयोगोऽपि गजकेसरियोगः इति शास्त्रसम्मतः। **अत्र समन्वयः -** रामलक्ष्मणसुमन्तगुहानां मेलनम् उत्तमफलदायकमासीत्। सूर्यचन्द्रसदृशौ रामलक्ष्मणौ सुमन्तगुहसदृशगुरुशुक्रयोगेन उत्तमगुणान् सम्प्राप्य अरण्यवासे विजयं प्राप्तवन्तौ।

**उदाहरणम् (4)**

अरण्यकाण्डे स्वर्णमृगमानेतुं गतस्य रामस्य सहायार्थं सीता लक्ष्मणं प्रेषितवती। तदनन्तरं रामस्य विषये चिन्त्यमानां सीतामपहर्तुं रावणः समागतः। प्रघट्टोऽयम् इत्थं वर्णितः वाल्मीकिना यथा -

**अभव्यो भव्यरूपेण भर्तारमनुशोचतीम्।**
**अभ्यवर्तत वैदेहीं चित्रामिव शनैश्चरः॥**[2]

यथा आकाशे शनैश्चरः चित्रानक्षत्रस्य समीपमायाति तद्वद् दुष्टः रावणासुरः जगन्मातरं जानकीमपहर्तुं समीपमागतवान्। शनैश्चरः स्वाभाविकतया पापग्रहः वर्तते। नीलशरीरयुक्तः, कुरूपी अस्तीति हेतोः दुर्जनस्वभावीति ज्ञायते। प्रसङ्गेऽस्मिन् रावणासुरः शनैश्चर इव, सीता चित्रेव इति वाल्मीकिना वर्णितम्। चित्रानक्षत्रस्य तुलाराशौ तृतीय-चतुर्थपादौ विद्येते। तुलाराशिः शनैश्चरस्य उच्चराशिः वर्तते।

---

1 जा.पा. 7-116, 117

2 3-46-9/10

बृहत्संहितायां शनैश्चराध्याये वराहमिहिरेण तत्फलमित्थम् अभिवर्ण्यते यथा -

**चित्रास्थे प्रमदाजनलेखकचित्रज्ञ चित्रभाण्डानि ।**[1]

मन्दः चित्रानक्षत्रे यदा सञ्चरति तदा लोके स्त्रियः, लेखकाः, चित्रकाराः, चित्रभाण्डानि पीडामनुभवन्ति। **अत्र समन्वयः** अनया रीत्या भाविकाले शनैश्चरस्य उच्चराशित्वेन बलिष्ठेन रावणेन सीता अत्यन्तपीडिता भविष्यतीति ज्ञायते।

**उदाहरणम् (5)**

**बुधाङ्गारकयोः ग्रहयुद्धम् -**

किष्किन्धाकाण्डे वालि-सुग्रीवयोः युद्धम् आकाशे बुधाङ्गारकयोः युद्धमिव वाल्मीकिना वर्णितम् -

**ततः सुतुमुलं युद्धं वालिसुग्रीवयोरभूत्।**
**गगने ग्रहयोर्घोरं बुधाङ्गारकयोरिव ॥**[2]

वालिः कुज इव, सुग्रीवः बुध इव, रामः रवि इव अभिवर्णितं वाल्मीकिना। बुधः सर्वदा रव्याश्रितः। सुग्रीवः प्रथमवारं पराजितः भूत्वा राममाश्रितवान्। कुजः पापग्रहः तथैव बलवान्, सैन्याधिपतिश्च।

बुधाङ्गारकयोर्युद्धफलं बृहत्संहितायां ग्रहयुद्धाध्याये -

**भौमेन हते शशिजे वृक्षसरित्तापसाश्मकनरेन्द्राः।**
**उत्तरदिक्स्थाः क्रतुदीक्षिताश्च संतापमायान्ति ॥**[3]

कुजेन बुधः पराजितश्चेत् वृक्षेभ्यः, नदीभ्यः, मुनिभ्यः, राजभ्यः, यज्ञकर्तृभ्यः, वीरेभ्यः कष्टप्राप्तिः भविष्यति।

---

[1] बृ.सं.10-10/1

[2] 4-12-17

[3] बृ.सं.17-15

**समन्वयः** - प्रसङ्गेऽस्मिन् बुधसदृशः सुग्रीवः जित्त्वा वृक्षेभ्यः, नदीभ्यः, मुनिभ्यः, राजभ्यः, यज्ञकर्तृभ्यः, वीरेभ्यः सुखप्रदायकः सञ्जातः।

बुधः अस्तङ्गतात् यदा उदेति तदा बुधदर्शनं पापफलं जनयति तद्वत् सुग्रीवः रामसमागमात्पूर्वं बहुवारं वालिना सह युद्धं कृत्वा पराजयं प्राप्तवान्। रविसदृशेन इनकुलसम्भूतेन श्रीरामचन्द्रसाहाय्येन सुग्रीवः वालेः उपरि विजयं प्राप्तवान्।

एवं युद्धकाण्डे अङ्गदवज्रदंष्ट्रयोः युद्धवर्णनावसरे बुधाङ्गारकयोर्दृष्टान्तः। तद्यथा-

**रुधिरोद्गारिणौ तौ तु प्रहारैर्जनितश्रमौ।**
**बभूवतुः सुविक्रान्तावङ्गारकबुधाविव॥**[1]

अङ्गदवज्रदंष्ट्रौ द्वन्द्वयुद्धं कुरुतः। तस्मिन् सन्दर्भे रक्तयुतौ शरीरौ अङ्गदवज्रदंष्ट्रौ बुधाङ्गारकौ इव भासेते।

**उदाहरणम् (6)**

युद्धकाण्डे रामरावणयोर्युद्धे सूर्यग्रहचारः इत्थं वर्ण्यते वाल्मीकिना -

**स धूमपरिवृत्तोऽर्मिः प्रज्वलन्निव सागरः।**
**उत्पपात तदा कृद्धः स्पृशन्निव दिवाकरम्॥**[2]
**शस्त्रवर्णः सुपुरुषो मन्दरश्मिर्दिवाकरः।**
**अदृश्यत कबन्धाङ्कः संसक्तो धूमकेतुना॥**[3]

सः रावणः धूमकेतुसदृशः। धूमयुक्ततरङ्गैः सह सागर इव कोपोद्रिक्तः रावणः सूर्यस्पर्शनार्थमिव उपक्रमति। तीक्ष्णखड्गाग्रमिव कृष्णवर्णयुक्तः कान्तिहीनः धूमकेतोः शिरयुतसूर्यः आकाशे दृष्टः।

---

[1] 6-54-28

[2] 6-104-31

[3] 6-104-32

वारहसंहितायां धूमकेतुयुतसूर्यस्य फममित्थं वर्ण्यते -

**ते चार्कमण्डलगताः पापफलाश्चन्द्रमण्डले सौम्याः।**
**ध्वाङ्क्षकबन्धप्रहहरणरूपाः पापाः शशाङ्केऽपि॥**[1]

धूमकेतुयुतरविबिम्बे काकः, कबन्धः, शस्त्राणि इत्यादिरूपदर्शनं भवति चेत् अशुभफलानि प्राप्नुवन्ति।

**राजोपकरणरूपैश्छत्रध्वजचामरादिभिर्विद्धः।**
**राजान्यत्वकृदर्कः स्फुलिङ्गधूमादिभिर्जनहा॥**[2]

तथैव रविबिम्बे छत्र-ध्वज-चामरेत्यादि राजचिह्नानि दृश्यन्ते चेत् तस्य देशस्य राज्ञः पालनं समाप्यते। नूतनराज्ञः पालनं भविष्यतीति ज्ञायते। एवमेव धूमं विना धूम इव आच्छादनं भवति चेत् तस्मिन् राज्ये प्रजानां क्षयः भविष्यति। **समन्वयः -** तदर्थमेव रावणस्य मृत्युः, विभीषणस्य पट्टाभिषेकः, एवमसुराणां क्षयः सञ्जातः।

एवं प्रकारेण वाल्मीकिः चन्द्र-शुक्र-गुरु-राहु-केतु-ग्रहाणामपि स्थान-गतिम् आश्रित्य रामायणे अनेकेषु स्थलेषु व्याख्यातवान्, तेषां प्रभावः कथायां अधिकतया दृश्यते।

## सन्दर्भग्रन्थसूची

१. वाल्मीकिमुनिप्रणीतं रामायणम् - श्रीनिवासशास्त्री - परिमल पब्लिकेशन्स - देहली २०२० (१-६ volumes).

२. बृहत्संहिता - एम्. रामकृष्ण भट - मोतिलाल् बनारसी दास - देहली – १९८२ (१&२ volumes).

---

[1] बृ.सं.3-8

[2] बृ.सं.3-18

३. नारद संहिता - विश्वनाथ राजु - श्री सायि-वास्तु पब्लिकेशन्स-भाग्यनगरम् -२०१२
४. भारतीय गणितशास्त्र चरित्र - रेमल्ल अवधानुलु - श्री वेदभारति- भाग्यनगरम्-२०१६ (२) भागः
५. बृहज्जातकम् - वराहमिहिराचार्यः - उन्निकृष्णन् नम्पियातिरिः - २०१०
६. जातकपारिजातम् - श्रीवैद्यनाथः – चौखम्बा संस्कृत संस्थान – वाराणसी – २००७

**ए. श्रीनिवास शर्मा**
शोधच्छात्रः
ज्यौतिष-वास्तुविभागः,
राष्ट्रियसंस्कृतविश्वविद्यालयः,तिरुपतिः



# आधुनिकशैक्षिकप्रशासने कौटिलीयार्थशास्त्रस्य प्रासङ्गिकता

**श्रुथि केबि**

**सारांशः**

कौटिल्यः तक्षशिलाविश्वविद्यालये शिक्षाविदः मौर्यसाम्राज्यस्य प्रधानमन्त्री चासीत्। कौटिल्येन लिखितम् अर्थशास्त्रं तत्कालीनभारतीयसामाजिकस्थितिनीति-सैन्ययुद्धादिविषये लिखितप्रमाणं वर्तते। अर्थशास्त्रम् आधुनिककालेऽपि साम्प्रतिकभारतीयराजनैतिकतायाः अभ्यासं निर्दिशति। अर्थशास्त्रग्रन्थे शासकस्य गुणाः, शासनव्यवस्थाः, अनुशासनविषयाः, राष्ट्रोन्नत्यर्थम् अनेके उपायाः च सविस्तरं प्रतिपादितम्। राष्ट्रप्रगतये तदीयशिक्षाव्यवस्थायाः महत्तरं स्थानं वर्तते। शैक्षिकव्यवस्थायाः उन्नतिः शैक्षिकप्रशासनाधारितो भवति। शैक्षिकप्रशासनं शिक्षायाः आन्तरिकानुशासनविधिः वर्तते येन सामान्यतया शिक्षायाः प्रशासनिकसिद्धान्तस्य अभ्यासस्य च परीक्षणं करोति। साम्प्रतिकशैक्षिकप्रशासनप्रसङ्गे कौटिलीयार्थशास्त्रस्य प्रासङ्गिकता पत्रेऽस्मिन् प्रस्तूयते।

**कूटशब्दाः**

निर्णयनम्, नियोजनम्, सङ्घटनम्, सम्प्रेषणम्, निर्देशनम्, समन्वयनम्, प्रतिवेदनम्, आयव्ययप्रारूपणम्, मूल्याङ्कनम्, प्रशासनम्।

कस्यापि राष्ट्रस्य भविष्यम् अग्रिमपरम्परायाः कृते प्रदीयमानशिक्षायाः उपरि निर्भरं भवति। शिक्षाव्यवस्थायाः महत्त्वपूर्णसोपानं भवति प्रशासनव्यवस्था। वैश्विकप्रशासनस्याङ्गमेव शिक्षाप्रशासनमपि। शिक्षाप्रशासनप्रक्रियानिर्वहणे निर्णयनम्, नियोजनम्, सङ्घटनम्, सम्प्रेषणम्, निर्देशनम्, समन्वयनम्, प्रतिवेदनम्, आयव्ययप्रारूपणम्, मूल्याङ्कनम् इत्यादीनां महत्त्वपूर्णं स्थानं भवति। भविष्याय

दृष्टिकोणः एवं भवेदिति वक्ति यथा - **व्यापारी एकवर्षात् पूर्वं योजनां कुर्यात्, राष्ट्रनेता दशवर्षपूर्वं योजनां कुर्यात्, एकः शिक्षकः एकां परम्परां पुरस्कृत्य योजनां कुर्यात्** इति। अत्र एकस्य शिक्षकस्य महत्त्वपूर्णा भूमिका वर्तते। शिक्षणे, स्वाध्ययने, सम्प्रेषणे, मार्गदर्शने, अनुसन्धानकार्ये, सामाजिककार्यकरणे, शैक्षिकप्रशासनप्रबन्धनादिवैविध्य-पूर्णकार्यक्षेत्रे बहुमुखप्रतिभावान् भवति शिक्षकः। शैक्षिकप्रशासनप्रबन्धनविषये अध्यापकस्य भूमिका महती एव। नेतृत्वं प्रबन्धनादिविषयाः समग्रारूपेण प्रतिपादिताः तत्र प्रप्रथमग्रन्थः वर्तते अर्थशास्त्रम्। ज्ञानस्य विविधशाखासु विस्तृतज्ञानं प्राप्तः कौटिल्यः प्राचीनभारतवर्षस्य सर्वोत्तमः आचार्यः आसीत्। अधीतसर्वविषयः सः स्वस्य ज्ञानानुसारं समेषां सदुपयोगाय विस्तृतविषयान् प्रतिपाद्य ग्रन्थोऽयं अरचयत्।

आर्थिकप्रशासनविषये अर्थशास्त्रं कौटिल्येन क्रि.पू.चतुर्थशताब्द्यां लिखितम्। अस्मिन् १५ अध्यायाः, ३८० श्लोकाः, ४९६८ सूत्राणि च सन्ति। आर्थिकप्रबन्धनविषये प्रथमपुस्तकमिदं वर्तते। मुख्यतया प्रशासनकलायां आधारितमुख्यविषयाः अत्र निर्धारिताः। प्रबन्धनविषये उपदिष्टप्रबोधनमाध्यममिदं अर्थशास्त्रम्। कौटिल्येन स्वस्य राज्ञे चन्द्रगुप्तमौर्याय ग्रन्थोऽयं विरचितः। ग्रन्थस्यारम्भे उक्तं वर्तते यत्, पुस्तकमिदं शासकानां मार्गदर्शकरूपेण लिखितमिति। अधिकारिभिः देशस्य एकतानिर्वहणे, धनसंरक्षणे, संस्थानां सञ्चालने, क्रियाकलापानां निर्वहणे च ध्यानं दर्शयितुम् अयं ग्रन्थः मार्गदर्शनं करोति। आश्चर्यं यत् कौटिल्येन प्रतिपादितांशैः वर्तमानकालीनप्रबन्धनसिद्धान्तानाम् अवधारणा स्पष्टतया व्याख्याताऽस्ति। अर्थशास्त्रम् अद्यत्वे प्रबन्धने इव प्रबन्धनदर्शनम्, दौत्यम्, प्रेरणादिविषये महत्त्वम् ददाति। प्रभुशक्तिः (दर्शनम्), मन्त्रशक्तिः (दौत्यम्) उत्साहशक्तिः (प्रेरणा) चेति मार्गत्रयेण शासनं कर्तुं कौटिल्यः उपदेशं प्रददाति। कौटिल्येन उत्तमप्रबन्धनस्य केचन युक्तयः प्रतिपादिताः। वित्तीयप्रबन्धनस्य सकारात्मकपक्षेषु अपि स्वमतं प्रकाशितवान्। शासने

स्वीयलक्ष्याण्यपि कौटिल्यः अस्मान् स्मारयति। यथा –

- बलं प्रापयेत् (वर्तमानक्रियाकलापः प्रभावः आनीतव्यः)।
- यत् प्राप्तं तत् एकीकरणीयम् (वर्तमानक्रियाकलापं प्रभावीकृत्य प्राप्तफलं एकीकरणीयम्)।
- यत् प्राप्तं तस्य विकासं कुरुत (नवीनान् अवकाशान् विचिन्त्य तेषामुपयोगं कुर्वन्तु)।
- उपलब्धेः आस्वादः करणीयः। (भविष्यस्य कृते वर्तमानक्रियाकलापः भिन्नभिन्नाशये परिणमयित्वा कार्यकरणम्)।

राजा स्वसाम्राज्यस्य पालने निपुणवान् भवेत्। तत् च नैपुण्यसम्पादने प्रशिक्षणमपि प्राप्नुयात्। कौटिल्यमते राज्ञः लक्षणं प्रत्यपादि यथा –

**विद्याविनीतो राजा हि प्रजानां विनये रतः।**
**अनन्यां पृथ्वीं भुङ्क्ते सर्वभूतहिते रतः।।**[1]

कार्यालयस्य कुशलसञ्चालनार्थं प्रौद्योगिक्याः विस्तृतयन्त्राणां च स्थापना आवश्यकी इति कौटिल्यः सूचयति। तस्याः संस्थायाः सङ्घटनात्मकपक्षेषु, मानवीयसम्बद्धविषयेषु, नेतृत्वविषयेषु, आवश्यकतानां पूर्त्तये च कौटिल्यस्य स्पष्टदृष्टिः अस्ति। कौटिल्यः सविस्तृतप्रबन्धनसंस्थां निर्मितवान्। नीतयः प्रक्रियाश्च कस्याः अपि प्रक्रियायाः कार्यान्वयनस्य महत्त्वपूर्णपक्षाः सन्ति। अर्थशास्त्रे समाजस्य, वैय्यक्तिकवृत्तीनाम्, दुर्घटनानाम्, दुराचारनियन्त्रणस्य च विस्तृतनीतयः प्रतिपादिताः। अस्मिन् क्षेत्रे प्रभावशीलप्रक्रियासम्पादानस्य कुशलकार्यान्वयनस्य च प्रमुखतत्त्वानि अवलोकयन्ति। स एव प्रबन्धनस्य मानवीयपक्षः। जटिलमानवव्यवहारस्य उत्तमं ज्ञानं

---

[1] अर्थशास्त्रम्/विनयाधिकारिकम्/ 1-5-18

कस्यापि उपक्रमस्य सफलतायै अत्यावश्यकमेव। कुशलं प्रामाणिकं च प्रबन्धनं मानवस्वभावे आधारितं भवति। एवम् आलस्यं निष्क्रियता चेति द्वे अनभिलषणीयमानवमनोवृत्ती इति कौटिल्यः सूचयति। एतादृशमनोवृत्तीः अवगच्छेत् वर्जयेत् च मनुजः। अत्रैव कौटिल्यस्य मते नेतृत्वस्य महत् प्राधान्यं वर्तते। नेतृत्वस्य सफलता जनानां स्वीकार्यतां समाश्रित्य भवतीति कौटिल्यः सूचयति। अतः न्यायः धर्मः चेति शासनस्य आधारभूतस्तम्भद्वयं कदापि न विस्मर्तव्यमिति उपदेशं प्रददाति।

**तस्मात् स्वधर्मं भूतानां राजा न व्यभिचारयेत्।**
**स्वधर्मं संसाधनो हि प्रेत्य चेह च नन्दति ।**[1]
**व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः ।**
**त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति ।।**[2]

यदा कश्चन नेता उद्भवति तदारभ्य जनाः नेतारम् अनुसरन्ति। अत एव सः स्वस्य स्वेच्छाधिपत्यं त्यक्त्वा समाजकल्याणाय प्रयतेत। अतः सः स्वस्य आत्मनिरीक्षणेन आत्मदोषाणां मूल्याङ्कनं कृत्वा स्वस्योन्नतये विकासाय च प्रयासं कुर्यात्। कौटिल्यः नेतारम् उपदिशति यत् नेतारः स्वस्य कर्मचारिणां सदस्यानां च दोषाणां अध्ययनं कृत्वा तेषां दोषाणां निवारणार्थं प्रयत्नं कुर्युः इति। मन्त्रिणः अयोग्याः भवितुम् अर्हन्ति, सेनापतयः अतिमोहयुक्ताः भवितुम् अर्हन्ति, न्यायपालनसन्दर्भे अद्यतनरीतयः, प्रशासनस्य विषयः परम्पराः च विचार्यन्ते कर्मचारिभिः। येन समाजे अन्यायः आरभ्यते। नेतृत्वविचारे भाविशासकानां कृते विशेषप्रशिक्षणं दातव्यमित्येवं विविधाः प्रशासनिकविषयाः आत्रान्तर्भवन्ति। मन्त्रिनियुक्तये केचन गुणाः

[1] विनयाधिकारिकम्/ विद्यासमुदेशः/ त्रयीस्थापना
[2] विनयाधिकारिकम्/ विद्यासमुदेशः/ त्रयीस्थापना

मानदण्डरूपेण परामृश्यन्ते। ते गुणाः सन्ति यथा - **एकाग्रचित्तयुक्तः, सच्चरित्रवान्, प्रज्ञावान् (चिन्तनक्षमताशीलः), वंगमी (संवादकौशलयुक्तः) तथा जाग्रतापूर्णनिरीक्षकः** इति। अपि च मन्त्रिणि यानि कौशलानि भवेयुः तानि प्रस्तौति - **ज्ञानं, कौशलं, मनोवृत्तिरित्यादि** इति। एतानि कथनानि अद्यतनप्रबन्धनस्थित्या सह तुल्यान्येव। कौटिल्यस्य मानवव्यवहारस्य ज्ञानं अवर्णनीयमेव। परित्यक्तव्याः षट् भावात्मकविषयाः तेन सूच्यन्ते। ते च **कामः, क्रोधः, लोभः, मनः (माया), मदः, हर्षः (आनन्दः)।**

**विद्याविनयहेतुरिन्द्रियजयः कामक्रोधलोभमानमदहर्षत्यागात्कार्यः।।**
**कर्णत्वगक्षिजिह्वाघ्राणेन्द्रियाणां शब्दस्पर्शरूपरसगन्धेष्वविप्रतिपत्तिरिन्द्रियजयः।।**[1]

एकस्याः कुशलिन्याः प्रभावपूर्णायाः च संस्थायाः प्रमुखक्षेत्राणां परीक्षणं कृत्वा कौटिल्यः तस्यां संस्थायां सम्मुखीभूतानां बाह्यवास्तविकस्थितीनां विषये ध्यानं ददाति। कौटिल्यमते एकस्य प्रशासनसंविधानस्य आवश्यकता तस्य **सम्बद्धकार्यक्षेत्रम्, जनसंख्या, देशः, एकता** इत्यादयः। अधिकारिणः नियन्त्रणपरिधिम् अधिकृत्य कौटिल्यमतम् वर्तते यत् **एकचक्रमात्रं रथं न चलयति** इति मार्गदर्शकस्य ये गुणाः भवेयुः तेषां विषये सः स्पष्टः सार्थकः च भवेत्। मार्गदर्शकस्य व्यावहारिकानुभवः, सद्विवेकः, भेदाभेदचिन्तनक्षमता च सर्वाधिकं महत्त्वपूर्णा भवति।

**कौटिल्यमते प्रशासकस्य गुणाः**

**1. ज्ञानम्**

क्षमतायाः अल्पम् अन्तरं परिणामेषु महत् अन्तरं जनयितुं शक्नोति। एतेषां भेदानाम् अभिज्ञानं, प्राप्तिः, विकासः च एकस्य व्यक्तेः वृत्तिविषयककार्ये मुख्यं लक्ष्यं

---

[1] विनयाधिकारिकम्/ प्रथमाधिकरणम्/इन्द्रियजयः

भवति। येन उत्तमपरिणामः प्राप्यते। ज्ञानं सर्वाधिकं महत्त्वपूर्णं धनमस्ति। ज्ञानस्य स्थायित्वस्वभावः वर्तते। एकदा अर्जितं चेत् वर्धमानं भवति। प्रत्येकं नूतनं ज्ञानं अन्यैः ज्ञानक्षेत्रैः सह सम्बन्धम् प्रकाशयति। ज्ञानस्य प्रत्येकमुन्नतिः नूतनान् अवसरान् सृजति। आत्मविकासाय ज्ञानं महत्त्वपूर्णमेव।

**वार्ता दण्डनीतिश्चेति बार्हस्पत्याः।।**
**संवरणमात्रं हि त्रयी लोकयात्राविद इति।।**
**दण्डनीतिरेका विद्येत्यौशनसाः।।**
**तस्यां हि सर्वविद्यारम्भाः प्रतिबद्धा इति।।**

एवं चतस्रः एव विद्याः इति कौटिल्यः।।

**ताभिर्धर्मार्थौ यद्विद्यात्तद्विद्यानां विद्यात्वम्।।**
**सांख्यं योगो लोकायतं चेत्यान्वीषिकी।।**

## 2. चिन्तनम्

**नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम्।**
**आपत्सु च न मुह्यन्ति नराः राजर्षिबुद्धयः।।**

चिन्तनं सृजनात्मकं भवति। भवन्तः यथा चिन्तयन्ति तथा स्वस्य जगत् निर्मातुं शक्नुवन्ति। परिस्थितिभ्यः जनेभ्यः च भवद्भिः यः अर्थः कल्प्यते सः भवतः मानसिकचिन्तनस्य उपरि निर्भरता भवति। यदा भवन्तः स्वचिन्तनं परिवर्तयन्ति तदनु भवतः जीवनं परिवर्तते। जीवनस्य नियन्त्रणं कर्तुं भवतः मनः नियन्त्रणं कर्तव्यम् इत्येवं चिन्तनस्योपरि कौटिल्यमतम्।

## 3. योजना

यदि योजनायां असफलता भवति तर्हि भवान् स्वयं असफलः भवति। सर्वाणि प्रभावीकार्यकरणसिद्धिः कार्यसफलता च साधुयोजनायाः आधारेण भवति।

भवतः लक्ष्यं विशिष्टं सुदृढं च भवेत्। लक्ष्यप्राप्तिप्रक्रियाविषये दृढनिश्चयः भवेत्। यदि योजनायां असफलता भवति तर्हि भवतः स्वयं असफलः भवति। सर्वाणि प्रभावीकार्यकरणसिद्धिः कार्यसफलता च साधुयोजनायाः आधारेण भवति। भवतः लक्ष्यं विशिष्टं सुदृढम् च भवेत्। लक्ष्यप्राप्तिप्रक्रियाविषये दृढनिश्चयाः भवेत्।

## 4. नेतृत्त्वम्

महान् नेता विघ्नानां, दुःखानां च सम्मुखे साहसेन अभिमुखीकरोति। समस्यानिवारणे क्षमतां दर्शयति। नेतृत्वक्षमताशक्तिः यस्मिन् व्यक्तौ निर्भरा भवति सः तस्य उपयोगं सर्वाधिकं प्रभावीरूपेण करोति। यः नेतृगुणैः सम्पन्नः वर्तते तस्मै अधिकारः समायाति।

**आत्मज्ञानं समारंभस्तितिक्षा धर्मनित्यता।**
**यमर्थान्नापकर्षन्ति स वै राजर्षिः।।**

ज्ञानं, स्थिरोत्साहः, क्षमा, धर्मेत्यादिषु सम्पन्नः, जीवनदुर्घटनासु अचञ्चलाः ये सन्ति ते एव नेतृस्थानमर्हन्ति। नेतारः संवेदनशीलाः भवन्ति, अनुयायिनां आवश्यकतानां, भावनानां प्रेरणानां च विषये दत्तश्रद्धां प्रददति। नेतृत्वस्य आधारः प्रामाणिकता, एकता, सत्यपालनं, प्रत्यक्षव्यवहारः चेति भवन्ति। नेतारः भविष्यस्य पूर्वानुमानं कर्तुं क्षमतां विकासयन्ति। आत्मानुशासनं नेतृणां महत्त्वपूर्णवैत्यक्तिकगुणः भवति। नेता स्वकर्मचारिन् अवगन्तुं सम्यक् नीतयः निर्मातुं च बुद्धिमान् भवेत्। तथा च नियुक्तानि कार्याणि समये एव प्रत्यायोजयितुं, प्रेरयितुं, उत्तरदायित्वपूर्वकं सम्पादयितुं च समर्थाः भवेत्। अत्र नेतृणां भूमिका महत्त्वपूर्णा जटिला विमर्शनात्मिका च भवति ।

## 5. सफलता

यस्य कस्यापि उद्यमस्य सफलतायाः महत्त्वपूर्णः आधारः भवति

प्रायोगिकता। नूतनविचारः कुतः आगतः, प्रथमं कः चिन्तितवान् इतस्मिन् प्रासङ्गिकता नास्ति। परन्तु अयम् आशयः कार्ययोग्यः अस्ति वेत्यत्र महत् प्राधान्यमर्हति। कतिपयाधारभूतसार्वभौमिकनियमानां पालनेन, नियमानाम् उल्लङ्घनस्य परिहारेण, अपर्याप्ततायाः निराशायाः असफलतायाः च मुक्तिः इत्यादिषु सफलता साध्यं भवति। सफलतायै योजनापूर्णकर्मकरणम् अत्यावश्यकम्। कार्याय पूर्वनियोजनायाः आवश्यकता महत्त्वपूर्णा एव। सफलताप्राप्तये प्रतिपुष्टिसङ्ग्रहणं मुख्यं भवति। प्रतिपुष्टेः कारणात् कृतस्य कार्यस्य मूल्याङ्कनं नूतनापरिवर्तनं च कृत्वा सफलतां प्राप्तुं शक्यते।

**यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः।।**
**समृद्धिरसमृद्धिर्वा स वै राजर्षिरुच्यते।।**

प्रत्येकस्य सफलातायाः विशिष्टं कारणं भवति। सफलता याद्दचश्चिकी न भवति। सफलता अवसराधारितं न भवति। सफलता भाग्यस्य आधारेण अपि न भवति। सफलता सुविचारितक्रियायाः परिश्रमस्य च परिणामः भवति।

**निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः।**
**अवन्त्यकालो वश्यात्मा स वै राजर्षिरुच्यते।।**

**वर्तमानकाले शैक्षिकप्रशासनिकविषये कौटिल्यदर्शनस्य प्रासंगिकता**

"सुखस्य मूलं धर्मः ॥1॥ धर्मस्य मूलमर्थः ॥2॥ अर्थस्य मूलं राज्यम् 11311 राज्यमूलमिन्द्रियजयः॥14॥ इन्द्रियजयस्य मूलं विनयः 1151 विनयस्य मूलं वृद्धोपसेवा 11611 वृद्धसेवाया विज्ञानम्॥7॥ विज्ञानेनात्मान संपादयेत् ॥8॥ संपादितात्मा जितात्मा भवति॥9॥ जितात्मा सर्वार्थैस्संयुज्येत॥10॥ अर्थसंपत्प्रकृतिसंपदं करोति॥11॥ प्रकृतिसंपदा ह्यनायकमपि राज्यं नीयते॥12॥ प्रकृतिकोपस्तर्वकोपेभ्योः गरीयान्॥13॥"

धर्मः सुखस्य मूलं कारणम् अस्ति। अर्थः धर्माधारितः। अर्थस्य उत्पत्तिः देशः

इति कौटिल्य मतम्। इन्द्रियाणां विजयेन राज्यस्य विजयः सम्भवति । विनयः नैतिकता च इन्द्रियनिग्रहकारणानि भवन्ति। वृद्धसेवा विनयस्य आधारः। तादृशं ज्ञानं यः प्राप्नोति सः जितेन्द्रियः। सः आत्मसम्माननम् प्राप्नोति। ते स्वकामनाः पूरयितुं शक्नुवन्ति। वित्तीयसम्पदां माध्यमेन उत्तमप्रशासनस्य निर्माणं सम्भवति। यदि कस्यपि देशस्य राजा, मन्त्रिमण्डलं, सेना च सुव्यवस्थितं भवति तर्हि तस्य देशस्य शासनव्यवस्था सुष्ठु गमिष्यति। सर्वासां संस्थानाम् अपि एतादृशी स्थितिः भवति। शैक्षणिकप्रशासनक्षेत्रे प्रत्येकं उन्नतिः तस्याः संस्थायाः सदस्यानां प्रशासकानाञ्च प्रभावे निर्भरा भवति।

कौटिल्ययुगस्य आश्रमाणां परमलक्ष्यं छात्राणां कृते ज्ञानं प्रदातुं मानवजातेः सेवां कर्तुं एकस्याः परम्परातः अन्यस्यै परम्परायै ज्ञानस्य स्थानान्तरणं च आसीत्। अद्यतनशैक्षणिकसंस्थासु सेवाभावना अतीव न्यूनस्तरे विद्यते तथा च एतेषां संस्थानां प्रायः प्रमुखलक्ष्यं धनार्जनं, व्यावसायिकी भावना च इति वर्तते। सेवाकार्यरूपेण शैक्षणिकसंस्थानां शिक्षाप्रदानं, सामान्यशुल्कव्यवस्था, शैक्षणिकसंस्थाभिः क्रियमाणः शिक्षकच्छात्रशोषणस्य प्रतिबन्धः इत्यादि विषयाणामवधारणया वर्तमानकालीन-शैक्षणिकसंस्थाः कौटिल्यस्य शिक्षादर्शनस्यानुगुणं परिवर्तयितुं शक्यते।

अर्थशास्त्रं वदति यत् ज्ञानप्रदानस्य सुनिश्चयः शासकस्य कर्तव्यम् इति। ज्ञानिनां, ॠषीणां, ब्राह्मणानां, तपस्विनां, निःस्वार्थानां, श्रद्धालुजनानाम् उपदेशग्रहणे विमुखातां न प्रदर्शयेत्। अर्थात् आचार्याणाम् अवहेलना कदापि न कुरुत। कौटिल्यस्य काले शिक्षायाः प्रसारणे राज्यपक्षतः सहायता, प्रोत्साहनं च कृतमासीत्। राज्यद्वारा शैक्षणिकसंस्थानां सहायताप्रदानं, प्रतिभावन्तः छात्राणां कृते छात्रवृत्तिप्रदानं च दातव्यमिति कौटिल्यस्य मतम्। राज्यस्य उत्तरदायित्वं निर्दिश्य कौटिल्यः कथयति यत् विद्वद्जनानां, राष्ट्रसेवारतानां बौद्धिककार्यं कुर्वतां जनानां च आजीविकायाः व्यवस्थां

कर्तुं राष्ट्रस्य दायित्वम् वर्तते इति। एतानि सर्वाणि तत्त्वानि प्रशासनविषयेष्वन्तर्भवन्ति।

कौटिल्यस्य शिक्षादर्शने शैक्षिकप्रशासनपक्षस्यापि स्पष्टप्रतिपादनं विद्यते। आधुनिककालेऽपि कौटिल्यस्य नीतेः प्रासंगिकतां निराकर्तुं न शक्यते। वर्तमानकाले अपि शिक्षायां पाठ्यक्रमस्य निर्धारणम्, परीक्षायाः विधिः, समयसूची निर्माणं, परिणामः च इति विषयेषु सर्वकारस्य नियन्त्रणं दृश्यते। एवं प्रकारेण शिक्षानीतिः अपि सर्वकारेण एव घोषिता भवति। यद्यपि सम्प्रति शिक्षाक्षेत्रेयथा कौटिल्यस्य काले इव अधुनापि शिक्षाक्षेत्रे विशेषशिक्षकानां कृते सर्वकारः सम्मानं करोति। शिक्षकवत् प्रतिभावन्तः छात्राणां प्रति अपि सर्वकारस्य उत्तरदायित्वं निराकर्तुं न शक्यते। कौटिल्यस्य कालस्य शैक्षणिकव्यवस्थायाः सदृशं प्रतिभाशालिनां छात्राणां छात्रवृत्तिः प्रदत्ता भवति अधुनाऽपि। शोधकार्येषु प्रवृत्तानां छात्राणां कृते अपि विभिन्नप्रकारस्य छात्रवृत्तिः प्रदत्ता भवति। येन ते स्वीय शोधकार्यं समयेन, विना क्लेशं च सम्पादयितुं शक्नुवन्ति। अतीव आनन्ददायकं यत् अधुना भारतसर्वकारेण छात्राणां भोजनप्रदानस्य कार्यम् अपि आरब्धम् अस्ति इति। सर्वकारेण बालकानां मूलभूतः अधिकारे शिक्षा एका इति घोषितः। २०१० पर्यन्तं कस्यापि बालकस्य प्राथमिकशिक्षाम् न त्याज्यः इति निर्णयः कृतः। भारतसदृशे विकासशीलदेशे केचन मातापितरः स्वसन्ततिं शिक्षितुं असफलाः भवन्ति। दरिद्रता कारणात् ते स्वस्य लघुबालकानामपि कार्यं कर्तुं प्रेषयन्ति। एतानि सर्वाणि तथ्यानि मनसि निधाय भारतसर्वकारेण मध्याह्नभोजन-कार्यक्रमः आरब्धः। अद्य सर्वेषां राज्यानां शैक्षणिकसंस्थासु मध्याह्नभोजनकार्यक्रमः कार्यान्वितः अस्ति।

**निष्कर्षः** -

ख्रीष्टात् पूर्वं चतुर्थशताब्द्यां लिखितं अर्थशास्त्रं शताब्देभ्योऽनन्तरमपि तस्य प्रासंगिकता न परित्यक्ता। अर्थशास्त्रं भारतस्य भूतपूर्वस्य सगौरवप्रशासनस्य

प्रमाणमस्ति। पाश्चात्याः अपि अस्माकं परम्पराम् अनुसरन्ति। अर्थाशास्त्रस्य बहुमुखाध्ययनं विदेशेषु बहु कृतम् सम्प्रति प्रचलत्यपि। भविष्याय बौद्धिकसम्पत्संवर्धने राष्ट्रपुनरुत्थाने च अर्थशास्त्रस्य प्रासङ्गिकता महती एव।

## साङ्केतिकपदावली

आयव्ययप्रारूपणम्- Budgeting
नियोजनम्- Planning
निर्णयनम्- Decision making
निर्देशनम्- Instruction
प्रतिवेदनम्- Reporting
प्रशासनम्- Administration
मूल्याङ्कनम्- Evaluation
सङ्घटनम्- Organizing
समन्वयनम्- Coordination
सम्प्रेषणम्- Communication

## साहायकग्रन्थसूची

अर्थशास्त्रीयकालीन सामाजिक जीवन – डा मंजुश्री श्रीवास्तव
Studies in Kautilya – M. V Krishna Rao
Kautilya’s Arthasastra and Modern world- Radhavallabha Tripathi
Kautilya’s Arthasastra and Social Welfare – V. N. Jha

## साहायकजालस्थलानि

https://www.esamskriti.com/e/Spirituality/Education/Arthashastra-Lessons-for-Management-Theory-1.aspx

https://dharmorakshtirakshitah.wordpress.com/2017/05/01/chanakya-on-education/

https://www.soulveda.com/guest-contributors/chanakya-thoughts-siksa-and-siksaka/

https://usiofindia.org/publication/usi-journal/kautilyas-arthashastra-and-its-relevance-to-contemporary-strategic-studies/

https://dharmorakshtirakshitah.wordpress.com/2017/05/01/chanakya-on-education/

https://www.vedic-management.com/15-qualities-of-an-ideal-leader-according-to-kautilya-chanakya/

**SRUTHY KB**
KIZHAKKEPURAKKAL (HOUSE)
PO. KODAKARA
KUNNATHARA (Via)
TRISSUR, KERALA 680684
Mob - 9562342289
Email- sruthybabu9@gmail.com



# हठयोगे बन्धमुद्राः

**डॉ. तपनकुमारघडेइ**

यथा ब्रह्माण्डस्य आधारस्थलं शेषनागो भवति इति पुराणविदः वदन्ति, तद्वत्सर्वेषां योगतन्त्रविधीनामाधारा कुण्डली भवति। किमर्थमित्युक्ते कुण्डलीबोधेन विना योगशास्त्रोक्तसर्वोपायाः व्यर्थाः भवन्ति। उक्तं च हठयोगप्रदीपिकायाम् –

**सशैलवनधात्रीणां यथाधारोऽहिनायकः।**
**सर्वेषां योगतन्त्राणां तथाधारो हि कुण्डली**[1]।। इति।

यदा गुरुकृपया साधकस्य प्रसुप्ता कुण्डली जाग्रता भवति, तथा साधकस्य सर्वासु ग्रन्थिषु ब्रह्मग्रन्थि-विष्णुग्रन्थि-रुद्रग्रन्थिषु तथा च सर्वाण्यपि पद्मानि मूलाधार-स्वाधिष्ठान-मणिपुर-अनाहत-विशुद्ध-आज्ञाचक्राणि अपि सचेतानि भवन्ति। यथा उक्तम् –

**सुप्ता गुरुप्रसादेन यदा जागर्ति कुण्डली।**
**तथा सर्वाणि पद्मानि भिद्यन्ते ग्रन्थयोऽपि च**[2]।। इति।

कुण्डलीनां प्रबोधेन साधकः षट्चक्रादीनां विकासं कर्त्तुं पारयति। अतः यः साधकः भवति स च साधकः कुण्डलिनीजागरणाय सर्वदा सर्वथा प्रयत्नं कुर्यात्। अनेन निरन्तरप्रयत्नेन सुषुम्नानाड्याः मार्गे सुप्तकुण्डल्याः जागरणे च प्रधानसहायकः भवतीति योगशास्त्रे वर्णितः अस्ति। किन्तु यः साधकः भवति स च साधकः यदि दशमुद्राणां नित्याभ्यासं कुर्यात्, तत्साधकस्य कुण्डलीजागरणे इयं सुषुम्नानाडी प्रधानसहायिका भवति। अस्मादुच्यते योगशास्त्रे याश्च दशमुद्राः उक्ताः तासां दशमुद्राणां

---

[1] हठयोगप्रदीपिका- 3/1

[2] हठयोगप्रदीपिका- 3/2

निरन्तरमभ्यासः कर्त्तव्यः। उक्तं च स्वात्मारामेण –

**तस्मात् सर्वप्रयत्नेन प्रबोधयितुमीश्वरीम्।**
**ब्रह्मद्वारमुखे सुप्तां मुद्राभ्यासं समाचरेत्**[1]।। इति।

दशमुद्राणां नामानि इत्थम् उक्तानि –

**महामुद्रा महाबन्धो महावेधश्च खेचरी।**
**उड्यानं मूलबन्धश्च बन्धो जालन्धराभिधः।।**
**करणी विपरीताख्या वज्रोली शक्तिचालनम्।**
**इदं हि मुद्रादशकं जरामरणनाशनम्**[2]।। इति।

एताः याश्च मुद्राः वर्त्तन्ते ताश्च मुद्राः विशिष्य जरामरणावस्थाभ्यां दूरे स्थापयन्ति। एतासां सर्वासां मुद्राणां सर्वप्रथमाभ्यासः आदिनाथेन शिवेन कृतः आसीत्। यदि तासां मुद्राणामर्हनिशमभ्यासं कूर्महे तर्हि अष्टसिद्धीनां प्राप्तिर्जायते। ताश्च अष्टसिद्धयः इत्थं यथा – अणिमा-महिमा-गरिमा-लघिमा-प्राप्ति-प्राकाम्य-ईशिता-वशिताश्चेताः। इमाः मुद्राः देवानां प्रियाः भवन्ति। उक्तं च –

**आदिनाथोदितं दिव्यम् अष्टैश्वर्यप्रदायकम्।**
**वल्लभं सर्वसिद्धीनां दुर्लभं मरुतामपि**[3]।। इति।

साधकः एताः सर्वाः मुद्राः तथैव गुप्ताः कारयेत्। यथा कश्चिद्गृहस्थः धनाभूषणानि मञ्जूषायां गुप्तरूपेण स्थापयति, अपि च एतस्यास्य मुद्राभ्यासस्य नियमः विषये नीतिविषये वा कस्यापि पुरतः कदापि नैव प्रकाशनीयः। तथा काचित्कुलस्त्री निजपतिसुरतविषयं कस्यापि पुरतः न प्रकटयति तद्वन्मुद्राभ्यासोऽपि नैव प्रकाश्यः।

---

[1] हठयोगप्रदीपिका- 3/5

[2] हठयोगप्रदीपिका- 3/6-7

[3] हठयोगप्रदीपिका- 3/8

**गोपनीयं प्रयत्नेन यथा रत्नकरण्डकम्।**
**कस्यचिन्नैव वक्तव्यं कुलस्त्रीसुरतं यथा**[1]**।।** इति।

एतासु दशमुद्रासु त्रयाणां बन्धानामावश्यकता नितरां वर्त्तते हठयोगिषु, तस्मादत्र त्रयाणाम् उड्डीयानबन्ध-जालबन्ध-मूलबन्धानामुपादेयता अत्यन्तम् अस्तीति हेतुः ते च बन्धाः अत्र आलोच्यन्ते। वस्तुतः यद्यपि अन्येषु हठयोगशास्त्रग्रन्थेषु बन्धानामालोचना कृता अस्ति, परन्तु अत्र अहं केवलं घेरण्डसंहितामाश्रित्य बन्धानामालोचनां कुर्वनस्मि।

**1) उड्डीयानबन्धः**

योगसाधनायां बन्धानामुपयोगिता उल्लेखनीया। बन्धं विना प्राणायाम न कदापि कर्त्तव्यः। यतो हि बन्धराहित्येन कृतेन प्राणायामेन वास्तविकलाभो नावाप्यते।

**नियमः -** उड्डीयानबन्धस्य विधिविषये उच्यते यत्- उदरे नाभेरूर्ध्वभागे पश्चिमतानं कुर्यात्। यथा खगः आकाशे अविश्रान्तरूपेण भ्रमति, तथैव मध्यस्थनाडीचक्रं सङ्कुचितरूपेण उत्थापनीयम्। एषः बन्धः मृत्युरूपिगजस्य कृते सिंहसदृशबलशाली भवति। यथा-

**उदरे पश्चिमं तानं नाभेरूर्ध्वं तु कारयेत्।**
**उड्डानं कुरुते यस्मादविश्रान्तं महाखगः।**
**उड्डीयानं त्वसौ बन्धो मृत्युमातङ्गकेसरी**[2]**।।** इति।

**प्रयोजनम् –**

---
[1] हठयोगप्रदीपिका- 3/9
[2] घेरण्डसंहिता - 3/10

विद्यमानेषु त्रिविधेषु बन्धेषु उड्डीयानबन्धः विशिष्टेति अङ्गीक्रियते। उड्डीयानबन्धः यः सम्यग्रूपेण अभ्यसेत्, तस्य मुक्तिः स्वाभाविकी भवेदिति। उक्तं च -

**समग्राद्बन्धनादेतदुड्डीयानं विशिष्यते।**
**उड्डीयाने समभ्यस्ते मुक्तिः स्वाभाविकी भवेत्**[1] ।। इति।

2) **जालन्धरबन्धः**

**नियमः** - जालन्धर इत्यस्य शब्दस्यार्थोऽस्ति जालसमूहः। यः समस्तनाडीजालं सीनोति। जालन्धरबन्धस्य विधिविषये कथयति यत् कण्ठसंकोचनं कृत्वा चिबुकं हृदये सन्यस्यति तं बन्धं जालबन्धरबन्धमिति वदामः। अनया प्रक्रियया षोडशाधारबन्धनं भवति। एषः बन्धः मृत्युमुखादपि उद्धारकारको भवति। उच्यते-

**कण्ठसङ्कोचनं कृत्वा चिबुकं हृदयेन्यसेत्।**
**जालन्धरकृते बन्धे षोडशाधारबन्धनम्।**
**जालन्धरमहामुद्रा मृत्योश्च क्षयकारिणी**[2] ।। इति।

**प्रयोजनम्** - जालन्धरबन्धः योगिनां सिद्धिदायको भवति। षण्मासं यावत् योऽभ्यासं करोति सः साफल्यमाप्नोतीति नात्र सन्देहः। तदुक्तम् -

**सिद्धं जालन्धरं बन्धं योगिनां सिद्धिदायकम्।**
**षण्मासमभ्यसेद्यो हि स सिद्धो नात्र संशयः**[3] ।। इति।

3) **मूलबन्धः**

**नियमः** - मूलबन्धशब्दस्यार्थो भवति उत्पत्तिस्थलम्। अस्य बन्धस्य अभ्यासात् मूलाधारचक्रस्य अर्थात् उत्पत्तिस्थलस्य ग्रन्थि-स्नायू इत्यादयः सबलतराः भवन्तीति

---

[1] घेरण्डसंहिता - 3/11

[2] घेरण्डसंहिता - 3/12

[3] घेरण्डसंहिता - 3/13

अस्य बन्धस्य नाम मूलबन्धः। मूलबन्धविधिं व्याख्यायन् ऋषिवरः घेरण्डः वदति यत्- योनिप्रदेशस्य आकर्षणं वामगुल्फेन भवेत् तदनन्तरं यत्नपूर्वकतया नाभिग्रन्थिं मेरुदण्डे योजयेत् तथा दक्षिणगुल्फेन उपस्थेन्द्रियं दृढतापूर्वकतया बन्धनं कुर्यात्। यथा-

**पार्ष्णिना वामपादस्य योनिमाकुञ्चयेत्ततः।**
**नाभिग्रन्थिं मेरुदण्डे सम्पीड्य यत्नतः सुधीः।।**
**मेढ्रं दक्षिणगुल्फे तु दृढबन्धं समाचरेत्।**
**जराविनाशिनी मुद्रा मूलबन्धो निगद्यते**[1]।। इति।

**प्रयोजनम्** - यः पुरुषः संसारसमुद्रं तर्तुमभिलषति, सः अस्य बन्धस्य अभ्यासं विरलस्थाने गुप्तरूपेण करिष्यति। मूलबन्धाभ्यासेन वायुसिद्धिः भवतीति अत्र नास्ति संशयः। यदि यत्नतो साधयेत्, तर्हि आलस्यं जयेत्।

**संसारसमुद्रं तर्तुमभिलषति यः पुमान्।**
**विरलेसुगुप्तो भूत्वा मुद्रामेनां समभ्यसेत्। ।**
**अभ्यासाद्बन्धनस्यास्य मरुत्सिद्धिर्भवेद् ध्रुवम्।**
**साधयेद् यत्नतो तर्हि मौनी तु विजितालसः**[2]।। इति।

त्रिभ्यः बन्धेभ्यः अतिरिच्य इतोऽपि कश्चन बन्धः अवशिष्यते। यश्च बन्धः महाबन्धनाम्ना अभिधीयते। स च बन्धः दशमुद्रास्वेव अन्तर्भवति।

**4) महाबन्धः –**

**नियमः -** बन्धस्यास्य विधिविषये उच्यते यत्- वामपादस्य गुल्फेन गुदामूलं निरुद्ध्य तद्गुल्फं यत्नेन दक्षिणपादेन सम्पीड्य शनैः शनैः योनिप्रदेशमाकुञ्चयेत्

[1] घेरण्डसंहिता - 3/14-15

[2] घेरण्डसंहिता - 3/16-17

चालयेच्च तथा जालन्धरबन्धेन प्राणवायुं धारयेत्। यथा –

**वामपादस्य गुल्फेन पायुमूलं निरोधयेत्।**
**दक्षपादेन तद्गुल्फं संपीड्य यत्नतः सुधीः।।**
**शनैः शनैश्चालयेत् पार्ष्णि योनिमाकुञ्चयेच्छनैः।**
**जालन्धरे धारयेत् प्राणं महाबन्धो निगद्यते[1]।। इति।**

**प्रयोजनम् -** महाबन्धोऽयं सर्वबन्धेषु श्रेष्ठोऽस्ति। जरामरणविनाशकारिणी इयं मुद्रा वर्तते। एतस्याः प्रभावेन सर्वाः आकाङ्क्षाः पूर्णाः भवन्ति।

**महाबन्धः परो बन्धो जरामरणनाशनः।**
**प्रसादादस्य बन्धस्य साधयेत् सर्ववाञ्छितम्[2]।। इति।**

अतः अवसाने एवं वक्तुं शक्यते यत् एतेषां सर्वेषां बन्धानां प्रयोगेण सर्वाः व्याधयः कास-श्वास-प्लीह-कोष्ठ-श्लेष्मादयः विंशतिरोगाः नितरां समूलं नश्यन्ति। जठराग्निश्च वर्द्धते। अतः ये साधकाः भवन्ति ते नूनमेतेषामभ्यासं प्रतिदिनं कुर्वन्तु इति हठयोगिनां, हठयोगशास्त्राणां च आदेशः। उच्यते –

**मुद्राणां पटलं ह्येतत् सर्वव्याधिविनाशकम्।**
**नित्यमभ्यासशीलस्य जठराग्निविवर्धनम्। ।**
**कासः श्वासः प्लीहकुष्ठं श्लेष्मरोगाश्च विंशतिः।**
**मुद्राणां साधनाच्चैव विनश्यन्ति न संशयः[3]।।** इति।

हठयोगप्रदीपिकायाम् एतेषां त्रयाणां बन्धानां योगाभ्यासस्योपयोगविषये अपि एवमुक्तमस्ति यत् मूलाधारं यथायथं सङ्कोचितं कृत्वा उड्डीयानबन्धेन नाभिं पृष्ठं प्रति

---

[1] घेरण्डसंहिता - 3/18-19

[2] घेरण्डसंहिता - 3/20

[3] घेरण्डसंहिता – 3/97,99

आकर्षेत्। तथा इडापिङ्गले नाडौ जलन्धरबन्धेन बद्धा प्राणवायुं सुषुम्नामार्गं प्रवाहयेत्। कथितं यथा -

**मूलस्थानं समाकुञ्च्य उड्डियानं तु कारयेत्।**
**इडां च पिङ्गलां बद्धा वाहयेत् पश्चिमे पथि[1]।।**

एते त्रयः बन्धाः श्रेष्ठाः, सिद्धिप्रदाः, सर्वोपाययुक्ताः,सर्वयोगतन्त्रकुञ्चिकाभूताश्च भवन्तीति सर्वे योगिनः आमनन्ति ।

**सन्दर्भग्रन्थाः**

1. घेरण्डसंहिता – घेरण्डमुनिः, चौखम्बा संस्कृत प्रतिष्ठान, दिल्ली, 2011
2. पातञ्जलयोगसूत्रवृत्तिः – कृष्णदास अकादमी, वाराणसी, 1996
3. हठयोगप्रदीपिका – स्वात्मारामः, चौखम्बा विद्याभवन, वाराणसी, 2013

**डॉ. तपनकुमारघडेइ**
सहायकाचार्यः, योगविज्ञानविभागः,
राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः



[1] हठयोगप्रदीपिका- 3/74

# नाथपथः योगिनश्च – एकमध्ययनम्

**डा.के.एस्.सुमन्**

{Key words- नाथपथः, गोरक्षनाथः/गोरखनाथः, मत्स्येन्द्रनाथः, योगविद्या, गोपीचन्द्रः, जालन्धरनाथः, चौरङ्गिनाथः, बङ्गदेशः, भर्तृहरिः, अप्पावरु }

"अप्राप्तस्य प्राप्तिरेव योगः, प्राप्तस्य परिरक्षणं क्षेमः" इति ललक्ष योगक्षेमौ भगवान् आनन्दतीर्थयोगी त्रयोदशशतमाने एव। एतस्मिन्नेवार्थे खलु परमात्मा श्रीकृष्णः निजगाद गीतायां यत् एतादृशं योगं क्षेमञ्च वहाम्यहम् इति। ननु तर्हि किमप्राप्तम्? यस्य प्रापणाय वयं यतेम योगवन्तो आहोस्वित् युक्ता वा योगिनो वा भवेम इति मनसि वरीवर्ति नु संशीतिः ! तस्यापि प्रश्नस्य युदुनन्दन एव उत्तरमुत्तारयति सप्तशत्यां "समत्वं योग उच्यते", "योगः कर्मसु कौशलम्" इत्यादि । ननु यादवः अन्यत्र "योगस्थः कुरु कर्माणि" इति ब्रूते। यदि कर्मसु कौशलं योग उच्यते तर्हि "कर्मकौशलस्थः कुरु कर्माणि" इति उक्तम्भवति हि ! कथमेतत्सङ्गच्छते ? कर्मकरणात् कौशलं प्राप्यते वा कौशलवान् कर्म कुर्याद्वा ? किमत्र साधु ? अन्योन्याश्रयः खलु ? उभयमपि साधु कृष्णमते। किञ्चित् कर्मविषये ज्ञात्वा कर्म करोतु। ज्ञानपूर्वककरणात् कौशलं प्राप्यते। एवमेव कर्मविषये विदित्वा विदित्वा कौशलं संप्राप्य योगी भव इति तद्धार्दम्। अत उक्तन्तेन "**कर्मणैव हि संसिद्धिमास्थिता जनकादय**" इति। एवञ्च योगमार्ग एव अर्थात् ज्ञानपूर्वककर्माचरणमेव मोक्षावाप्तये अन्यादृशो मार्ग इति सकलशास्त्राणां हार्दम् अभिव्यनक्ति भगवान् श्रीकृष्णः। सहस्राधिकेभ्योपि वर्षेभ्य इममेव पन्थानमाश्रित्य महत्सिद्धिमापुः अस्मद्दृषयः। तानेव वयं योगिनः अथवा नाथा इति अद्य जानीमः। यदा एते स्वयोगसाधनया विषयान् सर्वान् स्ववशङ्कुर्वन्ति तदा एतेषां वचनमनुसृत्य जगदपि जेगीयते लेलीयते बोभूयते वा। अतः खलु भवभूतिरकथयत् - "**ऋषीणां**

**पुनराद्यानां वाचमर्थोनुधावति**" इति।

यद्यपि नाथपथे समागतानां महात्मनां काल-देश-शिष्यादिविषये अद्यापि इदमित्थमिति निर्णीतिः विद्वत्सु न वर्तते तथापि स्वामि मत्स्येन्द्रनाथस्य तथा तच्छिष्यस्य श्रीगोरखनाथस्य साधन-काल-देशादिविषये नास्ति नासीदपि विपश्चिदपश्चिमेषु कश्चन संशयलेशोपि। तत्र तावत् श्रीमत्स्येन्द्रनाथमहाभागस्तु आदिनाथाख्येन साक्षात् परमशिवेनैव योगविद्यामधिगम्य महान् योगी सञ्जात इति तु निश्चप्रचमेव जगतीतले। तस्माच्च महागुरोः श्रीगोरखनाथः अथवा गोरक्षनाथस्वामी सरहस्यां योगविद्यामवाप्य स्वाचार्य इव प्रपञ्चे कर्मनिबद्धज्ञानं प्रससार इत्ययमस्माकं भारतीयानां मोदावहोऽयं विषयः। एतदन्तेवासिनस्तु गोरखनाथिनः अथवा काणपाठा इति अद्य यावत् प्रथितयशसः। एते तु नाथाख्यपरमशिव इव स्वकर्णयोरुपास्थिपर्यन्तं कुण्डले धरन्ति सम्प्रदायम् अनूचानतया परिपालयन्ति च इत्यपि श्लाघनीयोऽयं विषयः। एते च शिष्याः अद्य अस्मद्राष्ट्रे सर्वत्र प्रसृता दरीदृश्यन्ते।

स्वामि मत्स्येन्द्रनाथस्य विषये एका प्राचीना जनजनिता सत्यकथा श्रूयते - कदाचित् जगतां नाथः श्रीपरमशिवः स्वपत्नीं गौरीं योगविद्याम् उपदिशन्नासीत् समुद्रतटे। किन्तु भगवती गौरी जगद्धिताय निद्राङ्गतेव व्यरराज । तदा मत्स्येन्द्रनाथः झषरूपेण तत्सर्वं शुश्राव। एतज्ज्ञात्वा पर्वतीपतिः (इन्द्रः = इदि परमैश्वर्ये) ज्ञानाख्यपरमैश्वर्यं प्राप्तवन्तं, नाथाख्यस्य स्वस्य भक्तञ्च तं झषं ('मत्स्य + इन्द्र + नाथ') मत्स्येन्द्रनाथ इति नाम्ना शब्दापयामास। किन्तु स्वोद्देशकं ज्ञानं अकस्मात् प्राप्तवन्तं तञ्च मत्स्येन्द्रनाथं "कञ्चित्कालं यावत् शिवोपदिष्टविद्यारहितो भव" इति शशाप शर्वाणी। तस्मात् सः अन्यस्मिन् जन्मनि शिवात् प्राप्तेन योगज्ञानेन महान् योगी भूत्वा गोरक्षनाथादिशिष्यान् अध्यापयामास इति विज्ञायते।

बङ्गदेशीये गोरक्षविजये अथवा मीनचेतने तु "मत्स्येन्द्रनाथः कञ्चित्कालं यावत्

अस्सामदेशीये कदलीराज्ये वर्तमानानां मायाविद्यावतां महाराज्ञीनां प्रेमपाशे सम्लग्नः स्वीयां शैवीं योगविद्यां, तासां मायाजाले च पपात। तदा तच्छिष्यः श्रीगोरक्षनाथः तासां षोडशशतात्मिकानां दुष्टस्त्रीणां हार्दं ज्ञात्वा स्वयमेव स्त्रीवेषेण तत्र गत्वा ताश्च महिळाः स्वयोगविद्यया जतुकाः कृत्वा स्वगुरुं पुनः तद्दत्तविद्ययैव यथापूर्वमकल्पयत्। अद्यापि अस्सामदेशस्य कदलीनगरे वतमानासु गुहासु परश्शतात्मिकाः जतुकाः दृग्गोचराः भवन्ति" इति एवं वङ्गदेशीये पुस्तके विभिन्नः कथानकः श्रूयते।

एवमेव बग्चिमहोदयेन सम्पादिते कौलज्ञाननिर्णयाख्ये पुस्तके – "भगवान् शिवः स्वयमेव धीवररूपेण मत्स्येन्दनाम्ना अवततार कौलज्ञानोपदेशाय। तन्त्रज्ञाननिपुणाः देव्युपासकाः योगिनस्तावत् पूर्वं कौला इति ख्यातिमभजन्। ततो मत्स्येन्द्रनाथस्योपदेशेन नाथपथमन्वसरन्" इति लिखितमस्ति।

यदपि स्यान्नाम, किन्तु एताभ्यस्सर्वाभ्य अपि कथाभ्यः मत्स्येन्द्रनाथस्य महागुरोः तद्विद्यायाः तच्छिष्याणां वा वैशिष्ट्ये काचिदपि त्रुटिः न दृश्यते इति तु सुष्ठु विजानीमः। तत्रभवतः स्वामिमत्स्येन्द्रनाथस्य अन्तेवास्यग्रगण्यस्य श्रीगुरुगोरखनाथस्य शिष्येषु प्रवरः श्रीजालन्धरनाथः। नेपालदेशे लब्धात् कस्माच्चित् नाटकात् इदन्तु विद्मः यत् - जालन्धरनाथः स्वजीवनविषये स्वशिष्यं गोपीचन्द्रमुपदिशन् - 'अहन्तु पूर्वं जालन्धरस्य नृपतिरासम्। यच्च राज्यं, स्वसप्तशताधिकाश्च पत्नीः च आसन् तत्सर्वं त्यक्त्वा इमं योगमार्गं गुरुवर्याणां गोरखनाथानां उपदेशामृतं च पिपासुः समागमम्' इति कथयति ।

एवमेव अन्यः कश्चन योगी पूर्वं उज्जयिन्याः नरपतिरासीत् भर्तृहरिनामकः। अयमेव राज्ञ्याः मय्नामत्याः अनुजः गोपीचन्द्रस्य च मातुलश्च अवर्तत इत्यपि श्रूयते। गोरखनाथमपहाय चौरङ्गिनाथ इति शिष्यान्तर आसीत् श्रीमत्स्येन्द्रनाथगुरोः यश्च वङ्गेशस्य पालराज्यस्य युवराज आसीत्। वस्तुतः चौरङ्गिनाथस्य हस्तौ, पादौ च

स्वसापत्नजनन्या खण्डिताः यदवस्थायामेव सः कानने परित्यक्तश्च । सन्दर्भेस्मिन् वने गुरुवर्यः मत्स्येन्द्रनाथः तमपश्यत् उपादिशच्च द्वादशवर्षाणि सकलयोगविद्याम् । यया न केवलं चौरङ्गिनाथः स्वाङ्गानि यथापूर्वमपश्यत् किन्तु मोक्षसाधनेपि निरततामभजत। विषयास्त्विमे गिरीशचन्द्र डे विरचिते पूर्णचन्द्राख्ये वङ्गदेशीये नाटके प्रस्तावितास्सन्ति। चौरन्ङ्गिनाथस्तु देवपालस्य पुत्र इति विज्ञायते । नेपालदेशे तु इमं मत्स्येन्द्रनाथगुरुं अवलोकितेश्वरनाम्ना सम्मानयन्ति। एवमेव मराठदेशसंप्रदायादपि महायोगिनः गोरक्षनाथस्य सम्बन्धं ज्ञानेश्वरस्य पितामहेन गोविन्दपन्थेन सह आसीदिति आबहोः कालादेव वयं ज्ञातुं पारयामः।

एतादृशः योगिनः न केवलमुत्तरभारते अपि तु दक्षिणभारतेप्यासन् ये च केवलं स्वतपोमहिम्ना योगविद्ययैव अनेकाः शिष्यकोटीः समनुगृह्णन्। आसीत् कश्चन महान् योगी इभरामपुर कृष्णाचार्यनामकः अष्टादशशततमे काले कर्णाटकान्ध्रप्रदेशसीम्नि जीवमानः। स च यद्यपि अनादिपरंपराप्राप्तवैदिकविद्यया शोभितः स्वयोगविद्यया अपरोक्षज्ञानवान्श्च तथापि भगवद्भक्तेषु सामान्य इव विराजमान आसीत् । तस्य च महात्मनः सामर्थ्यमेतदवर्तत यत् विना गन्धादिलेपनयापि शौचादिभ्यः प्रागपि सर्वदा परिमळपूर्णदेहवान् आसीत्। स च यत्र यत्र गच्छति स्म स स सर्वोपि प्रदेशः सुवासितो भवेत। एतादृक् महात्मा कदाचित् प्रतिसंवत्सरमिव नरसिंहजयन्त्यङ्गत्वेन सुरपुराख्यं नगरं जगाम। स चासीत् पुष्यमासः। मध्येमार्गं योगी कृष्णाचार्यः कुलकर्ण्याख्यस्य कस्यचन भक्तस्य गृहे एव तद्रात्रिम् व्यययामास। तस्मिन्नवकाशे कुलकर्णी योगिनः सेवाङ्कुर्वन् "हे योगिन् ! आगामि मध्वनवम्युत्सवे कृपया अस्मद्गृहमागत्य अस्मान् उद्धरत्विति" भक्त्या व्यजिज्ञपत्। किञ्चिद् समालोच्य बभाषे कृष्णार्यः "अस्तु, नूनमागमिष्यामि तद्दिने द्वादशवादने ह्यपराह्ने। यतः, तस्मिन्नेव दिने मया गन्तव्यमस्ति सोल्लापुर"मिति वाचो दत्तवान्। माघो मासस्समागतः। रथसप्तमी तथा भीष्माष्टमी

चेति उभेपि तिथी व्यतीते। योगिनः आगमनवार्तापि न श्रुता आहोस्वित् विज्ञाता। कुलकर्ण्याः मनसि उद्विग्नता व्यथा, वाचि मूकता च सहैव समुत्पन्ना। "ऋषीणां पुनराद्यानां वाचमर्थोनुधावति" इति आर्षवाक्यानुसारेण यदपि ऋषयः कथयन्ति तद् यद्यपि न घटनायोग्यं तथापि तत्तपःप्रभावेण नूनं भविता। किन्तु कुलकर्णी इदानीं बहून् परिवारजनान्श्च आहूतवान् उत्सवार्थं योगिदर्शनार्थञ्च इत्यतो बहुव्याकुलः सञ्जातः। समयो हि पञ्चन्यूनद्वादशवादनं सञ्जातम् । तदैव काचन रोमाञ्चनकारिणी घटना जाता। गृहस्य पूजागर्भप्रकोष्ठात् किमिपि अद्भुतं कस्तूरीपरिमळं निस्सरत् सर्वत्र प्रससार। येन सर्वे भक्ताः व्यामोहिताः देवगृहं प्रति अधावन्। तत्र च नैवेद्यम् निहितमसीत्। यदा देवगृहद्वारं उद्घाटितं तदैव तेषां भीतिजनकः कश्चन घटसर्पः दरीदृश्यत। तन्मध्ये योगिनः श्रीकृष्णाचार्यस्य मुखं स्पष्टम्प्रत्यभात्। तदा कुलकर्णिनः तथा तत्परिवारजनानां वदनानि नवकुन्दानीव विकसितानि। अतः खलु बाणभट्टः कथयति - "महात्मनां नामग्रहणेनैव वयं पुनीता भवेम किम्पुनर्दर्शनेन" इति।

एवमेव पुनरपि कुलकर्णी महोदयः सपरिवारः श्रीकृष्णाचार्यस्य योगिनः गृहं गत्वा साष्टाङ्गं प्रणिपत्य 'अस्मिन् संवत्सरे तु भवद्भिः अवश्यमागन्तव्यमेवेति' प्रार्थयामास। तथैव एतस्मिन्नपि वर्षे सर्वे मध्वनवमीदिवसे योगिनः दर्शनार्थं उत्साहातिशयेन प्रतीक्षमाणा आसन्। परं योगी न स्वात्मानं दर्शयाञ्चक्रे। तावदभ्यन्तरे कश्चन शुनकः पाकशालातः भगवन्निवेदितां होलिकाम् आदाय धावमानः पाचकेन च दण्डेन ताडितः होलिकां भुवि निपात्य कुत्राप्यधावत्। नैतत्सर्वं भक्तजनानां दृग्गोचरं जातम्। सर्वेप्यागता भक्ताः योगिनः दर्शनमप्राप्तास्सन्तः सखेदमेवे स्वस्वगृहमगच्छन्। आगामिवर्षे तु स्वयं कृष्णाचार्ययोगी कुलकर्णिना क्रियमाणे मध्वनवम्युत्सवे भागमग्रहीत् जनाश्च सन्तोषयामास। केचन योगिवर्यान् पप्रच्छुः "हे योगिन् , किमर्थं वर्षद्वयात् भवान् अस्मदुत्सवं प्रति नागतवानिति ?" तदा भाषमाणः योगिवर्यः "हे

मुग्धाः ! अहं प्रथमवर्षे सर्परूपेण, द्वितीयवर्षेपि शुनकरूपेण अवश्यमागतवान् भवद्दत्तनैवेद्यमपि चखाद किन्तु भवतः पाचकः मां दण्डेन ताडितवानित्यतो अधावम्" इति सर्वं यथावद् बभाषे। एवं महात्मानः स्वयोगविद्यया अस्मान् परीक्षितुं विविधरूपाणि स्वीकृत्य समागच्छन्ति अस्मान् अनुगृह्णन्ति च किन्तु वयं तान् परिलक्षयितुम् असमर्थाः भवेम।

स्वीये **महाराष्ट्र सारस्वता**ख्ये ग्रन्थे भावेमहाभागः कथयति "नाथपथश्च समग्रेपि महाराष्ट्रे द्वादशशतमानादेव ख्यातिमापयत्। नाथपथस्य च प्रभावः यावानासीन्नाम गोविंदपन्थनामकस्य पिता गोरखनाथेन नितरां प्रभावितः क्रि.श.१२०७ तमे वर्षे नाथपथमेव अनुससार" इति। एवं विविधानुसन्धानप्राप्तैः एवमादिविषयैः सुस्पष्टं ज्ञायते यत् नाथपथगाः योगिनः स्वयोगविद्यया न केवलं सच्छक्तिसम्पन्ना आसन् किन्तु लोककल्याणाय सज्जनोद्धरणाय च बह्वयतन्त इति। अद्यापि एतादृशाः योगिनः दृग्गोचरास्सन्ति नेपाल, कर्णाटक, बिहार, बङ्ग, गुर्जर, उत्तरप्रदेश, मरहट्टादिषु भारतदेशेषु।

मूलतः इमे नाथयोगिनः शिवोपासनया शैवा इति ख्याता आसन्। अस्य च दर्शनस्य पुष्टिस्तावत् तत्रभवता शङ्कराचार्येण दत्ता अद्वैतदर्शनप्रस्तुत्या। किन्तु अद्वैतं केवलं स्वात्मोद्धरणपरकं सन्दृश्य एते योगिनः लोककल्याणमपीच्छन्तः लोके वर्तमानां समस्तशक्तिं योगविद्यया सम्प्राप्य तेन च सज्जनोद्धरणं कर्तुमनसः शक्तिसहितस्य नाथस्य शिवापरनामकस्य परमात्मनः साक्षात्कारमिच्छन्तः नाथाख्यं अपरं पन्थानमेव आरेभिरे इत्यलं पल्लवतल्लजकल्पानल्पजल्पनेन॥

## Bibliography

1. Siddha-siddhantapaddhati of Goraksanatha A Treatise on the Natha Philosophy Edited by DR M L GHAROTE, Dr. G K PAI, 2005.

2. Karnatakada Nathapantha, Kannada, Rahmath Tarikere, 2013.
3. The Vivekadarpana : Scriptural Analysis and Commentary on the Philosophy and the Redemptive Teachings of the Nâthayogîs in Maharashtra, 2010.
4. The Return of the Serpents of Wisdom, Mark Amaru Pinkham – 1997.
5. Natha Sampradaya, Hazari Prasad Dwivedi -1950.
6. MASTERS OF MAGICAL POWERS : THE NATH YOGIS IN THE LIGHT OF ESOTERIC NOTIONS, Gordan Djurdjevic – 2008.
7. Appavaru, Ibharamapura, 2018.

**डा.के.एस्.सुमन्**

संस्कृतविभागाध्यक्षः,

लोयोला महाविद्यालयः(स्वायत्तम्),

चेन्नै नगरम्, तमिळनाडु

Ph : 9986015960,

email - vidwansuman@gmail.com

